No. 22 ] [ Price Rupee one.



THE
# CHOWKHAMBÂ SANSKRIT SERIES
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

भाष्योपबृंहितं

# तत्त्वत्रयम्

विशिष्टाद्वैतदर्शनप्रकरणम्

श्रीमल्लोकाचार्य्यचरणप्रणीतम् ।

# THE VEDÂNTA-TATTWATRAYA
OF
SRÎ LOKÂCHÂRYYA SVÂMÎ
WITH A COMMENTARY

EDITED BY
SWÂMÎ BHÂGAVATÂCHÂRYYA,
*Professor, Government Sanskrit-College, Benares.*

FASCICULAS I.

PUBLISHED AND SOLD BY THE SECRETARY,
CHOWKHAMBÂ SANSKRIT BOOK-DEPÔT:
BENARES.
AGENT:—OTTO HARRASSOWITZ, LEIPZIG:

PRINTED BY FREEMAN & CO., Ld, AT THE TARA PRINTING WORKS,
BENARES.

1899.

श्रीः ।

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥
स्तवकः २२—

चौखम्बा-संस्कृत-ग्रन्थमाला ।

( ग्रन्थ संख्या ४ )

श्रीमद्वरवरमुनिस्वामिनिबद्ध-

भाष्योपबृंहितं

# तत्त्वत्रयम्

विशिष्टाद्वैतदर्शनप्रकरणम्

श्रीमल्लोकाचार्य्यचरणप्रणीतम् ।

काशिकराजकीयप्रधानसंस्कृतपाठशालायाम्

अध्यापकेन

स्वामिभागवताचार्य्येण संशोध्य च

मुद्रां गमितम् ।

काश्याम्

तारा-यन्त्रालये श्री०-बा०-हरीदासगुप्तेनफ्रीमैन कम्पनी लिमिटेड् द्वारा मुद्रयित्वा प्रकाशितम्

सन् १९०० ईस्वी ।

वैक्रमसंवत् १९५७ ।

शुभम् ।

# भूमिका

विशिष्टाद्वैतराद्धान्ते श्रीभाष्यश्रुतप्रकाशिकाप्रभृतिषु महानिबन्धेषु निवेशमर्थयमानानां कृते पुरस्तात्तदीयपदार्थावबोधो भवति सर्वथा प्रार्थनीयः । तत्सिद्धये च सन्त्येव वेदार्थसंग्रहतत्त्वमुक्ताकलापप्रमुखाः प्रबन्धा,स्तथापि न तेषु सर्वविद्वज्जनस्यापि सहसावबोधसम्भवो, दूरापेतः साधारणजनस्येति प्रथमभूमिकायामभिनवाधिकारिणां कृते तत्त्वत्रयं भाष्यसनाथमुपयोगितां भजेत, अधिकमनधिजिगांसूनां च पर्याप्नुयात् तावत्प्रबोधाय ।

इदं हि चिदचिदीश्वरात्मकतत्त्वत्रयमालम्ब्य स्वरूपलक्षणप्रमाणादिमुखेन निरूपयद्भिः श्रीमद्भिर्लोकाचार्यचरणैर्बुभुत्सुजनसौकर्याय प्राणायि प्रायो वादमर्यादया दयायत्तहृदयैः, परपक्षप्रतिक्षेपस्त्वावश्यक एव तत्रतत्रोदटङ्कि । येषां विषये खल्वेवं गुरुपरम्परायां गाथां पठन्ति सन्तः—

**" लोकाचार्याय गुरवे कृष्णपादस्य सूनवे ।**
**संसारभोगिसन्दष्टजीवजीवातवे नमः ॥ "** इति ।

श्रीमद्भिर्वरवरमुनिभिश्च प्राञ्जलोदात्तेन सारार्थसमाहरणप्रमाणोपन्यासाशयविशदीकरणपरेण भाष्येण तदेतदुपाबृंहि । येषां च विषये खल्वित्थं संग्रहगाथामुदाहरन्ति—

**" लोकगुरुं गुरुभिः सह पूर्वैः कूरकुलोत्तमदासमुदारम् ।**
**श्रीनगपत्यभिरामवरेशौ धीप्रशयं वरयोगिनमीडे ॥ "** इति

प्राचामाचार्याणां सर्वथा दयावशंवदा भवति प्रवृत्ति,र्यत्र खल्वेताभ्यां मूलभाष्यकाराभ्यां स्वस्वाभिधानमात्रकमपि नोदलेखीत्यागमभावैयेव सकलजनसौलभ्यायैतदुभयमप्यग्रन्थि । तदेतन्मूलं भाष्यञ्च विश्वविद्यात-

भूमभिरस्माकं भवाटवीमोक्षाध्वदेशिकैः सुगृहीतनामधेयैर्वृन्दावनगोवर्द्धनाङ्कैः श्रीरङ्गाचार्यस्वामिभिः संस्कृतेऽवातार्यैतद्देशजनतासाधारण्येन सार्थक्यसंपदे। तैर्हि प्रायः सर्व एवागमभाषानिबन्धा गाथासाहस्रीप्रभृतय उदीच्यजनानुकम्पयाऽवातारिषत संस्कृते। येषु चाभिज्ञानगाथामित्थमुदाहरन्ति—

" वाधूलवंशकलशाम्बुधिपूर्णचन्द्रं
श्रीश्रीनिवासगुरुवर्यपदाब्जभृङ्गम्।
श्रीवाससूरितनयं विनयोज्ज्वलं तं
श्रीरङ्गदेशिकमहं शरणं प्रपद्ये॥ " इति।

अत एव हि मूले ऽर्थाभेदेऽप्युपलभ्यमानः प्राचीनानुवादात् पाठभेद उपपद्यते। भाषान्तरीकरणे ह्याशयस्यैव स्थैर्यं सम्भवि न खलु वाक्यानुपूर्व्याः।

तदिदमाद्यं कस्यापि दाक्षिणात्यस्य संस्कृतानुवादपुस्तकादुदीच्येन केनापि विदुषा यदुदलेखि पुस्तकम् तदयोध्यानिवास्तव्यश्रीरणमुक्तभूल्यपण्डीतेन समग्राहि स्वीयपुस्तकसंग्रहे। ततोऽग्निहोत्रिहरिप्रपन्नपण्डितेन पुस्तकान्तरीकृतम्। एतद्धि विभक्तमूलभाष्यमर्यादं त्रिवेणीमयमशुद्धिषु हरितालाञ्छितं गैरिकव्यञ्जनाञ्जितं प्रायः शुद्धमेकमात्रं पुस्तकमासाद्यापि कार्यसम्भावनामाबध्नता खलु मया चौखम्बासंस्कृतसीरीजनामकशास्त्रीयपुस्तकश्रेणिप्रकाशनपरश्रीहरिदासगुप्तभृशप्रार्थितेन कार्यान्तरयोगादनवकाशेनापि तदेव पुस्तकमालम्ब्य मुद्राङ्कनामगामि समस्कारि च यथामति, मदज्ञानप्रयुक्तः कश्चन विभ्रमः परेषां मा प्रसाङ्क्षीदिति विभावयता मूलभाष्ययोर्बुद्धिभेदविषयान् पाठानधः शुद्धिटिप्पण्यां तत्रतत्रोद्भावयता विशोधयेयुर्विद्वांस इति। अनेन चेल्लोकानामुपकारः कोपि स्यात् तत्सुकृतमन्तर्यामिणि चराचरधरमगुरौ चिदचितामीश्वरे परमपुरुषेऽर्पयामि

वैशाख्याम् १९९७ भागवताचार्यः।

श्रीकाश्याम्

# तत्त्वत्रयम्

## भाष्योपबृंहितम्म् ।

श्रीमते रामानुजाय नमः ।

अनादिमायया सुप्त इत्युक्तप्रकारेणाऽनाद्यऽचित्संबन्धनिबन्धनाज्ञानान्धकारेणाभिभूता आत्मस्वरूपं प्रकृतेः परं ज्ञानानन्दमयं भगवदनन्यार्हशेषमजानन्तो देवोऽहं मनुष्योऽहमिति जडदेहेऽहंबुद्धिं कुर्वन्तः, उत्पन्नेपि देहातिरिक्तात्मज्ञान, ईश्वरोहमहंभोगीति स्वतन्त्रमभिमन्यमानाः, सत्यपि शेषत्वज्ञाने, ऽप्राप्तविषयेषु तद्विनियोजयन्तः—एवम्

> योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
> किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥

इत्युक्तप्रकारेणात्मस्वरूपे ऽन्यथाप्रतिपत्तिरूपमखिलपापमूलमात्मापहारं कुर्वन्तो ऽल्पास्थिरत्वादिदोषदुष्टशब्दादिभोगैकतपराः,

> विचित्रा देहसंपत्तिरीश्वराय निवेदितुम् ।
> पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ॥

इत्युक्तप्रकारेण करणकलेवरविधुरा भोगमोक्षशून्या अचिदविशेषिता बद्धात्मानस्तिष्ठन्ति ।

तद्दशायां परमदयालुना सर्वेश्वरेण स्वचरणकमलसमाश्रयणोपकरणतया दत्तं शरीरं प्राप्योज्जीवनौपयिकं तत्समाश्रयणमकृत्वा तदानीं त्वद्दत्तशरीरमार्गे भ्रमामीत्युक्तप्रकारेण पारं गन्तुं दत्तं प्लवमारुह्य प्रवाहमार्गेण समुद्रं प्रविशन्तइव संसारनिस्तरणौपयिकं संसरणहेतुं कृत्वा ऽनाद्यविद्यासंचितपुण्यपापकर्मानुगुणमनेकयोनिषु जनित्वा प्रतिजन्म दुरन्ततापत्रयदवाऽनलदह्यमाना अनादिकालं संसरन्तोप्य ऽतीतानागतानाभि-

ज्ञतया तत्र संसारे शोकरहिता गर्भजन्मबाल्ययौवनवार्द्धकमरणनरकरूपावस्थासप्तकं भजन्तो दुःखपरम्परामनुभूया ऽनन्तक्लेशभाजने संसारसागरे मग्ना व्याकुलीभवन्ति

तेषामनर्थविशेषमनुसंधाय तदुज्जीवनाय सृष्टिं कुर्वतस्सर्वभूतसुहृदः सर्वेश्वरस्य ।

एवं संसृतिचक्रस्थे भ्रम्यमाणे[1] स्वकर्मभिः ।
जीवे दुःखाकुले विष्णोः कृपा काप्युपजायते ॥

इत्युक्तप्रकारेण हृदय उत्पन्नेनापारकारुण्येन " जायमानं हि पुरुषं यं पश्येन्मधुसूदन " इत्युक्तप्रकारेण जायमाने कृतेन विशेषकटाक्षेण निरस्तरजस्तमस्कस्य प्रवृद्धसत्त्वस्य मुमुक्षोश्चेतनस्य तत्त्वज्ञानेन विना मोक्षासिद्धेःस्तत्त्वज्ञानं शास्त्रेणोपदेशेन वा संपाद्यम्. शास्त्रेण तस्य " शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारण " मित्युक्तप्रकारेण बहुक्लेशसाध्यतया दुःसाधत्वा[2],त्कथंचित्साधनायोद्योगकरणेऽप्य "ऽनन्तपारं बहु वेदितव्यमल्पश्च कालो बहवश्च विघ्ना " इत्युक्तप्रकारेण चेतनानां मन्दमतित्वान्मन्दायुष्ट्वाद् विघ्नानामनन्तत्वात्सर्वेषां ज्ञानसिद्धेर्दुर्लभत्वात् , शास्त्राभ्यासानधिकारिणां स्त्रीशूद्रादीनां मुमुक्षुत्वस्य निष्प्र[illegible]नत्वाच्च,उपदेशेन तत्संपादने उक्तदोषेषु कस्याप्यऽभावात्-अमुं विशेषम[illegible] सर्वशास्त्रनिपुणः सकललोकोज्जीवनकामः परमकारुणिकः श्रीलोकाचार्य्यः श्रुतिस्मृतीतिहासपुराणैर्दुरवगाहानन्तविस्तरेण[3] प्रतिपादितांश्चिदचिदीश्वरतत्त्वानां स्वरूपस्वभावविशेषानऽखिलचेतनसुग्रहं सुव्यक्तमेतत्प्रबन्धमुखेनाह. मध्यवीथिभट्टकृष्णपादप्रभृतिपूर्वाचार्याणामपि प्रबन्धनिर्माणे ऽयमेवाशयः ।

ननु निरहंकाराणां परसमृद्धिप्रियाणां ख्यातिलाभनिरपेक्षाणामेतेषां प्रबन्धनिर्माणमनुचितम्, एकेन कृतस्य प्रबन्धस्यान्येन परिपालनमेवोचितमिति चेत्सत्यम्, दिव्यसूरिभिरैककण्ठ्येनाभिधानाद-

---

(१) भ्राम्यमाणे-इत्यपिपाठः ।
(२) दुःसाध्यत्वादितिपाठान्तरम् ।
(३) दुरवगाहनं विस्तरेणेति पुस्तकस्थःपाठःममतु-दुरवगाहानन्तविस्तरेणेतियुक्तः प्रतिभाति ।

र्थस्याप्तता [यद्वा] सिध्यति,तथाचार्य्यैरेककण्ठ्येनोक्तावर्थस्याप्तता सिद्ध्यति. तथाच तत्र मन्दमतीनां विश्वासो भवेदित्यभिप्रायेणैकावि-षयेऽनेकैराचार्यैः पृथक्प्रबन्धो निर्मितः । किंचैकत्राऽविशदा अर्थ-विशेषा अन्यत्र विशदतया प्रतिपाद्यन्ते. तत्र कारणं सूक्तिविशेषाः संकोचविस्तरौ च. इदं चैककर्त्तृकप्रबन्धेष्वपि तुल्यम् ॥

( इत्युपोद्घातः )

## हरिः ॐ तत्सत् ॥

## मुमुक्षोश्चेतनस्य मोक्षोत्पत्तौ तत्त्वत्रयज्ञानमपेक्षितम् . तत्त्वत्रयं चिदचिदीश्वरश्च ।

मुमुक्षुर्मोक्षेच्छावान् संसारविमोचनेच्छावानिति यावत्. मुमुक्षो-रित्यनेन संसारनिवृत्ताविच्छोत्पत्तिर्दुर्लभेति सूच्यते. एतदिच्छानु-त्पत्तेरेव ह्यनादिकालं समसरत्, उज्जिजीवयिषु[१]: सर्वेश्वरो-ऽप्येतदिच्छोत्पत्तिपर्यन्तं विलम्बते संसारं द्रढयितुमिच्छां कुर्वत आत्मनस्तन्निवृत्ताविच्छोत्पत्तिर्दुर्लभा खलु, इदानीमस्य चेतनोक्ति-रपि साभिप्रायास चाभिप्राय ‘ श्चैतन्यप्रयोजनसिद्ध्युपक्रम इ-दानीमेवे ’ ति, अनादिकालं व्यर्थमेव जातं चैतन्यमुज्जीवनानुपयु-क्तत्वात्. अथ संसारनिवृत्तीच्छा च निरस्तातिशयाह्लादसुखभवैक-लक्षणाया भगवत्प्राप्तेरुपयुक्ता लक्ष्मीकान्तमेकमेव विषयीकरोति यत् तदेव हि ज्ञानम्. आत्मप्राप्त्यर्था संसारनिवृत्तीच्छा तु विपरीत-ज्ञानकार्य्यम्. तस्माद्भगवत्प्राप्तिविरोधिनः संसारस्य विमोचन इ-च्छावतोधिकारिणस्तादृशमोक्षरूपपुरुषार्थसिद्धौ तत्त्वज्ञानमपेक्षि-तमित्यर्थः । नच तत्त्वज्ञानोत्पत्तेः प्राक् कथं मुमुक्षेति वाच्यम्, परीक्ष्य लोकान् ” “ जायमानमित्यादिश्रुतिस्मृत्युक्तप्रक्रियया तत्सं-भवात्. तत्त्वज्ञानस्यावश्यापेक्षितत्वोक्त्या तत्त्वज्ञानान्मोक्ष इतिनियमः स्मारितः. तत्त्वज्ञानान्मोक्ष इत्येतत्सकलसिद्धान्तसाधारणम्,मोक्षत-त्त्वयोरेव हि विप्रतिपत्तिः

नन्वेवं ज्ञानान्मोक्ष इतिनियमस्वीकारे ।

---

( १ ) उज्जिजीविषुरिति पाठस्तु न युक्तः ।

पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः ।
तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ॥
यंयं स्पृशति पाणिभ्यां यंयं पश्यति चक्षुषा ।
स्थावराण्यपि मुच्यन्ते किं पुनर्बान्धवा जनाः ॥

इति ज्ञानायोग्यतिर्यक्स्थावराणामपि वैष्णवसंबन्धेन मोक्षसिद्धिप्रतिपादकवचनानां वैयर्थ्यं स्यादिति चेन्न, तेषां मुमुक्षुत्वाभावात् . प्रकृते मुमुक्षोश्चेतनस्य मोक्षसिद्धौ तत्त्वज्ञानमपेक्षितमित्युक्तम्. तत्र मुमुक्षुत्वतत्त्वज्ञानयोरुभयोरभावेपि तदुभयपरिपूर्णस्य कस्यचिद्वैष्णवस्याभिमान एव कार्य्यकर इत्युक्तम्. अतोभिमानिनो ज्ञानविशेषं दृष्ट्वाऽभिमानान्तर्भूतस्यास्येश्वरः कार्य्यं करोतीति ज्ञानान्मोक्ष इत्येतन्नियमस्तत्र सद्वारकस्सिद्ध्यति ।

तत्त्वज्ञानमित्यनुक्त्वा तत्त्वत्रयज्ञानमित्युक्तत्वात् न्यूनाधिकतत्त्वान्यभिदधतां बाह्यकुदृष्टीनां मतं प्रतिक्षिप्तम्. अनेन तत्त्वत्रयमितिनिर्णयकरणे प्रमाणं निर्दोषप्रमाणभूतो वेदान्तः. तत्र "भोक्ता भोग्यं प्रेरितारं च मत्वे" ति भोक्तृभोग्यप्रेरयितृशब्दैश्चिदचिदीश्वरात्मकतत्त्वानि त्रीण्यभिहितानि. तस्माद्वेदान्तप्रतिपाद्यं तत्त्वत्रयमिति निश्चित्य मोक्षसिद्धौ तत्त्वत्रयज्ञानमपेक्षितमित्युक्तम् ।

ननु "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति वेदान्तैर्भगवत्तत्त्वज्ञानस्यैव मोक्षोपायत्वमभिहितम् . अनेन तत्त्वन्तरपरिज्ञानस्यापि मोक्षोपायत्वं कथमुच्यत इतिचेत् , भगवत्तत्त्वस्य सकलचेतनाचेतनविलक्षणत्वेन तेषां कारणत्वेन व्यापकत्वेन धारकत्वेन शेषित्वेन च ज्ञातव्यतया तत्त्वान्तरभावे ईश्वरस्यैवं ज्ञानासंभवात् तत्त्वत्रयज्ञानापेक्षा निराबाधा. "भोक्ता भोग्यं प्रेरितारं च मत्वा" "पृथगात्मनं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती" तिश्रुतेरयमेवाशयः, अन्यथा तमेवं विद्वानितिश्रुतिविरोधापत्तेः . अत एवमेव तच्छुतिच्छाययाभिहितम्. तस्मान्न वेदान्तविरोधप्रसङ्गावकाशः ।

किं तत्तत्वत्रयमित्यादि . चित् चैतन्याधारो वस्तु . अचित् चैतन्यानाधारो वस्तु . ईश्वरो न योगवैशेषिकाद्यभिहित-

तत्त्वनिष्ठैरभिधीयमानः पुरुष विशेषो भवति, किंतु वेदान्तेष्वभिहितश्चिदचिन्नियन्ता " क्षरं प्रधानममृताक्षरं हरः " " क्षरात्मानावीशते देव एकः " " प्रधानक्षेत्रज्ञपतिर्गुणेश " इति श्रूयते ।

उद्देशक्रमेण तत्वत्रयस्य च स्वरूपस्वभावविशेषानुपपादयितुं प्रथमं चित्तत्वोपपादनमुपक्रमते चिदिति ।

**चिदित्यात्मोच्यते. आत्मस्वरूपं "गत्वागत्वोत्तरोत्तर"मित्युक्तप्रकारेण देहेन्द्रियमनःप्राणबुद्धिभ्यो विलक्षणम ऽजड़मानन्दरूपं नित्यमणवऽव्यक्तमचिन्त्यं निरवयवं निर्विकारं ज्ञानाश्रय ईश्वरस्य नियाम्यं[1] धार्य्यं शेषम् ।**

मध्यवीथिभट्टार्य्यकृष्णपादप्रभृतय आचार्य्यास्तत्वत्रयोपपादनसमये ऽचित्तत्वमुपक्रम्याभिदधुः, अयं चित्तत्वमुपक्रम्याभिदधाति, अस्यामभिप्रायः--अचित्तत्वस्य हेयतया ज्ञातव्यत्वादीश्वरस्योपादेयतया ज्ञातव्यत्वात् एवमुभयोरपि तत्त्वयोर्ज्ञातुरधिकारिणश्चेतनस्य स्वरूपस्य प्रथमं ज्ञातव्यत्वादिति. तथाभिदधतां तेषामाशयस्तु--प्रकृतेर्ज्ञानाभावे आत्मनः प्रकृतेः परत्वज्ञानासंभवात् प्रथमतः प्रकृतिं ज्ञात्वानन्तरं तदन्तर्वर्तिनमात्मानं ज्ञात्वा तदन्तर्यामिणः शरीरस्यात्मवदुभयाभिमानिन ईश्वरस्य स्वरूपज्ञानं बुद्ध्यारोहणक्रमेण संपादनीयमिति अचिदुपक्रमेणाभिधानमन्नमयमारभ्यानन्दमयपर्यन्तमारोहक्रमेणाभिदधत्याः श्रुतेर्मर्यादानुगुणम , चिदुपक्रमेणाभिधानं च भोक्ता भोग्यं प्रेरितारं च मत्वेत्यादिश्रुत्यनुगुणम्. तस्मात् क्रमद्वयं च वेदान्तसिद्धम् "चिदचिदीश्वरतत्स्वभावे" ति यामुनाचार्य्यवचनम् " अशेषचिदचिद्वस्तुशेषिण " इति भाष्यकारवचनं च कोटिद्वया-

---

(१) गदमदचरयमश्चानुपसर्गे इति यमो पोरदुपधादिति यतो ऽनुपसर्ग एव नियमितत्वाद्धलन्तलक्षणो ण्यदेव. तेन तत्र न भवेन्नियम्यामिति वार्त्तिकादिप्रयोगास्तु नियमे साध्वित्यन्यथैवो पयन्ना इति श्रीभाष्ये बहुलमेवं प्रायोजि, तद्वदेवेदमिति स्थितिः ।

नुगुणम् . चिदुपक्रमयोजनाऽक्षरस्वरससिद्धा, अचिदुपक्रमयोजनापि अक्षरानुगुणैव . तथाहि, चिदुपक्रमस्तु समस्तपदत्वात् द्वन्द्वसमासे अल्पाच्तरस्याभ्यर्हितस्य च पूर्वनिपातो ऽनुशासनसिद्धः. तत्राभ्यर्हितत्वाद ऽल्पाच्तरत्वाच्च चिच्छब्दः पूर्वं निपातितः. अभ्यर्हितेश्वरवाचकशब्दात् चेतनवाचकचिच्छब्दस्य पूर्वनिपातश्चाल्पाच्तरं पूर्वमित्यनुशासनसिद्धः . एवं क्रमद्वयमपि वेदवैदिकपरिगृहीतत्वान्मुख्यमेव ।

चिच्छब्दस्य " प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतना " इति ज्ञानवाचिशब्दैः सह पठितत्वाज् ज्ञानाश्रयवस्तुनि प्रसिद्धिप्राचुर्याभावाच्च " क्षरात्मानावीशते देव एकः " " य आत्मानमन्तरो यमयति यमात्मा न वेद यस्यात्मा शरीरम् " " आत्मा शुद्धो ऽक्षरः " " आत्मा ज्ञानमयोऽमल " इतिश्रुतिस्मृतिष्वनेकत्रोक्तत्वाज्जीवे प्रसिद्धिप्राचुर्यवता आत्मशब्देन चिच्छब्दं व्याचकार चिदित्यात्मेति ।

अथ किमस्यात्मनः स्वरूपमित्याशङ्कायामात्मस्वरूपलक्षणमाह आत्मस्वरूपमित्यादिना ॥ श्रुतिस्मृत्यादिषु कस्यचित् प्रमाणस्योपादानौचित्येपि दिव्यसूरिवचनोपादानं तत्त्वप्रतिपादकश्रुतिस्मृत्यादिभ्यस्तत्वदर्शिप्रधानस्यादिव्यसूरेर्वचनमेव तन्निर्णयस्य मुख्यप्रमाणमिति ज्ञापनार्थम्, "विधयश्च वैदिकास्त्वदीयगम्भीरमनोनुसारिण " इति परमाचार्य्यवचनम् ।

स्वरूपं स्वं रूपं असाधारणाकार इति यावत्, गत्वागत्वोत्तरोत्तरमिति अन्नमयप्राणमयमनोमयेभ्य उत्तरमित्यर्थः । देहेन्द्रियमनःप्राणबुद्धिभ्यो विलक्षणमित्यत्र बुद्धिपदेन किं महदनुगृहीतमन्तःकरणमुच्यते किं वा ज्ञानमुच्यते इति चेत्, अत्र ज्ञानं विवक्षितन्तत्त्वशेखरे देहादिवैलक्षण्याभिधानसमये तथाऽभिधानात्. देहेन्द्रियमनःप्राणधीभ्योऽन्य इति यामुनाचार्य्यैरुक्तम् ।

उद्देशो लक्षणं परीक्षा चेति त्रिधा तत्त्वनिर्णयक्रमः. तत्र चिदचिदीश्वर इति तत्वत्रयमुद्दिश्योद्देशक्रमेण तेषां स्वरूपशोधनं कर्तुं विचार्य्य प्रथमं चिच्छब्दनिर्दिष्टस्यात्मनः स्वरूपशोधनमुपक्रम्य देहेन्द्रियमनःप्राणबुद्धिभ्यो विलक्षणमित्यारभ्य शेषमित्यन्तं स्वरूपलक्षणमुक्तम्. अथ तत्परीक्ष्यते ।

तत्र प्रथममात्मनो देहादिवैलक्षण्यशोधनाय तज्जिज्ञासुः प्रश्न-मनुभाषते ।

**आत्मस्वरूपं कथं देहादिविलक्षणमिति चेत्, देहादीनां मम देहादिकमितिअत्मनः पृथगुपलभ्यमानत्वात्, इदमित्युपलभ्यमानत्त्वात्, आत्मनोऽहमित्युपलम्भात् अस्य कदाचिदुपलम्भादत्मनः सर्वदोपलम्भात् , एतेषामनेकत्वादात्मन एकत्वादात्मैतेभ्यो विलक्षणः स्वीकार्य्यः. एवं युक्तीनां बाधसंभावनायामपि शास्त्रबलेनात्मा देहादिविलक्षणः सिद्ध्यति ।**

आत्मस्वरूपमित्यादिना. अयमर्थस्तत्वशेखरे स्वयमेव विस्तरेणोक्तः.तत्र हि देहस्यानेकावयवसंघातात्मकत्वं सिद्धम् तत्र सर्वेषामवयवानां चैतन्यमस्ति चे,दनके चेतनोपलब्धिप्रसङ्गः अवयवानां परस्परमविवादनियमः तत्र ममताबुद्धिर्ममताव्यवहारश्च न संभवति,एकैकावयवस्यैव चैतन्याङ्गीकारे तद्विच्छेदे ऽवयवान्तरानुभूतं न स्मरेत्, पश्चादहंकारबुद्धिव्यवहारौ ममताबुद्धिव्यवहारौ च न स्युः, सर्वशरीरव्यापिसुखदुःखानुभवश्च न स्यात्. 'शरीरं नावयवसंघातात्मकमपित्ववयवि, तत्रचैतन्यंस्वीकार्य्य ' मिति तु न युक्तम्, उपलम्भानुपपत्त्यभावेनावयविस्वीकारानुपपत्तेः. किंच बालदेहोहं मन्दज्ञानः युवदेहोहं बहुज्ञानः मम शरीरमिति शरीराहमर्थयोर्जायमानौ भेदप्रतिपत्तिव्यवहारौ न स्याताम्. नच ममायमात्मेत्यत्रेव तावमुख्याविति युक्तम् , मुख्यत्वे बाधकाभावात् . अन्यथा ऽहंबुद्धेः शरीरमेव विषय इतिस्वीकारेपि श्रुतितदर्थापत्तिभ्यां देहातिरिक्तो देहान्तरपरिग्रहयोग्य आत्मा सिद्ध्यति ।

बाह्येन्द्रियाण्यपि नात्मा, एकस्यैव सर्वेन्द्रियविषयज्ञानात् . एवमनङ्गीकारे योहममुमर्थमपश्यं सोऽहं स्पृशामीति

प्रतिसंधानानुपपत्तिः. यदि चक्षुरेवात्मा, तर्हि अन्धो रूपं न स्मरेत्. यदि श्रोत्रमात्मा, तदा बधिरः शब्दं न स्मरेत् . एवमिन्द्रियान्तराणामात्मत्वेप्यनुपपत्तिर्द्रष्टव्या. नाप्यन्तःकरणमात्मा, स्मतुः स्मरणादिकार्य्यस्य करणतया कल्पितमिदमेव स्मरतीति स्वीकारासंभ्रमात् स्मरणस्य करणाभावात् । नच करणमपीदमेव, विरोधात्. अन्यत्किंचित्करणमिति चेत् , तद्यदि बाह्यकरणम्, तदा तच्छून्यो न स्मरेत्. यद्यन्तःकरणं, तदात्मनो मन इति नाम कृतं स्यात् . यद्यन्तःकरणमनपेक्षितं, तदेन्द्रियार्थसंबन्धकाले सर्वदा ज्ञानमुत्पद्येत तस्मान्मनश्च नात्मा, संघातरूपत्वाद्देहात्मपक्षोक्तदूषणानामत्रापि प्रसङ्गात् . ज्ञानं नात्मा, मम ज्ञानमुत्पन्नं नष्टमिति क्षणिकत्वेनात्मधर्मत्वेन चोपलम्भात्स्थिरः कश्चनात्मा ऽस्तीति पूर्वेद्युर्दृष्टवानयमद्य पश्यामीतिप्रत्यभिज्ञया सिद्धमिति विस्तरेणोक्तम् ॥

एवमत्रापि प्रत्येकनिरासे क्रियमाणे ग्रन्थविस्तरो भवेदिति मन्दमतीनां प्रतिपत्त्यर्थं देहादिकं समुच्चित्योपादाय तत आत्मनो वैलक्षण्यं कैश्चिद्युक्तिविशेषैः सुग्रहमाह देहादीनामित्यादिना देहादीनां मम देहो ममेंद्रियं मम प्राणो मम बुद्धिरिति ममताबुद्धिव्यवहारविषयतयाहमर्थात्पृथगुमलम्भात्, आत्मनो ऽहमर्थत्वेनोपलम्भाच्चेत्यर्थः. अस्येत्यादि. अस्येति देहेंद्रियादिकं परामृश्यते. देहस्य कदाचिदुपलम्भः कदाचिदनुपलम्भश्च जाग्रद्दशायां स्थूलोहकृशोहमित्यहंबुद्धिव्यवहारविषयतयात्मत्वेन भासमानस्यापि सुषुप्तिदशायां तथानुपलम्भः. आत्मनः सदोपलम्भश्च सुषुप्तेः प्रागेतत्सर्वं जानन्नहं सुषुप्तौ मम शरीरमपि न जानामीति प्रत्यभिज्ञोदयात् उभयावस्थायामपि देहातिरिक्तः कश्चनात्मास्तीत्युपलम्भः. अथ वा जन्ममरणभाक्त्वेन देहस्य कदाचिदुपलम्भः कदाचिदनुपलम्भः मया जन्मान्तरे कृतस्य फलमिदमिति लोकव्यवहारेणात्मनो जन्ममरणादिरहिततया सदोपलम्भः. एवं चक्षुरादिरूपेणोपलभ्यमानानामिन्द्रियाणामन्धबधिराद्यवस्थायामनुपलम्भात्, संकल्पादिहेतुतयोपलभ्यमानस्य मनसः कदाचिन्मूढतयानुपलम्भात् , उच्छ्वासनिश्वासाभ्यामुपलभ्यमानस्य प्राणस्य कदाचिन्मोहाद्यवस्थायां रक्तस्पर्शाद्यनुमेयतयानुपलम्भात्, विषयग्रहणवेलायामुपलभ्यमानस्य ज्ञानस्य विषयग्रहणाभावदशायामनुपलम्भात् . आत्मनस्तु प्राक् चक्षुःश्रोत्राभ्यां सुसंपन्नोहमिहानीमन्धो जातो बधिरो जातः, पूर्वं सुविशदम-

नस्क इदानीं न किंचिचिज्जानामि, तदानीमहं निष्प्राण इदानीं स-
प्राणो जातः, मम प्राग् ज्ञानमजनि इदानीं नष्टमित्येतेषामुपलम्भद-
शायामनुपलम्भदशायां चाविशेषेणोपलभ्यमानत्वात् ।

एतेषामित्यादि. अत्रैतच्छब्देन देहादयः परामृश्यन्ते. देह-
स्यानेकत्वमनेकावयवसंघाता[1]त्मकत्वम् . इन्द्रियाणामनेकत्वं चक्षुः-
श्रोत्रादिव्यक्तिभेदेन, मनसोनेकत्वं मनोबुद्धिचित्ताहंकारभेदेन, प्रा-
णस्यानेकत्वं प्राणापानादिभेदेन,बुद्धेरनेकत्वं ज्ञानभेदेन. एवं देहादेरे-
कैकस्यैवानेकत्वात् अहंबुद्धिव्यवहारार्हस्यात्मन एकत्वात् . देहा-
दिप्रकारस्य स्वात्मनः प्रकारस्य च निरूपणे आत्मा देहादिभ्यो
ऽन्य एव स्वीकर्तव्य इत्यर्थः . एवं युक्तिभिः साधितमर्थं शास्त्रेण
दृढीकरोति एवमितयादिना. बाधसम्भावनायामपीत्युक्त्या सर्वथा
बाधोद्भावनं केनापि न शक्यते कर्तुम्. तदुद्भावनेपि अस्यार्थस्य
श्रुतिस्मृत्यादिसकलशास्त्रसिद्धत्वाच्छास्त्रमेवामुमर्थं साधयतीत्यभि-
प्रायः सूचितः ।

"पञ्चविंशोयं पुरुषः" "पञ्चविंश आत्मा भवति"

"[2]भूतानि च कवर्गेण चवर्गेणेन्द्रियाणि च ।
टवर्गेण तवर्गेण ज्ञानगन्धादयस्तथा ॥
मनः पकारेणैवोक्तं फकारेण त्वहंकृतिः ।
बकारेण भकारेण महान्प्रकृतिरुच्यते ॥
आत्मा तु स मकारेण पंचविंशः प्रकीर्त्तितः ।
यः परः प्रकृतेः प्रोक्तः पुरुषः पंचविंशकः ॥
स एव सर्वभूतात्मा नर इत्यभिधीयते ।
आत्मा शुद्धो ऽक्षरः शान्तो निर्गुणः प्रकृतेः परः ॥
प्रवृद्ध्यपचयौ नास्य एकास्याखिलजन्तुषु ।
पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः ॥
ततोहमितिकुत्रैतां संज्ञां राजन्करोम्यहम् ।
किं त्वमेतच्छिरः किन्तु शिरस्तव तथोदरम् ॥
किमु पादादिकं त्वं वै तवैकिं महीपते ।
समस्तावयवेभ्यस्त्वं पृथग्भूतो व्यवस्थितः ॥

(१) संघातस्थाने संघपदं प्रायः पुस्तके भवति ।
(२) नानापुराणवचनान्येतानि ।

कोहमित्येव निपुणो भूत्वा चिन्तय पार्थिव ।
पञ्चभूतात्मके देहे देही मोहतमोवृतः ॥
अहंममेतदित्युच्चैः कुरुते कुमतिर्मतिम् ।
आकाशवाय्वग्निजलपृथिवीभ्यः पृथक्स्थिते ॥
अनात्मन्यात्मभावं वा कः करोति कलेवरे " ।

इत्यादिश्रुतिस्मृत्यादिसकलशास्त्रप्रतिपन्नमात्मनोदेहादिविलक्षणत्वं दुरपह्नवमित्याशयेन शास्त्रबलेनात्मा देहादिविलक्षणः सिद्ध्यतीति सुनिश्चयमनेनोक्तम् ।

**अजडत्वं नाम ज्ञानेन विना स्वयमेव प्रकाशमानत्वम् .**

अजडत्वमित्यादि . अजडत्वं नामानन्याधीनप्रकाशत्वं स्वयंप्रकाशत्वमिति यावत् . स्वयंप्रकाशत्वं च दीपस्य दीपान्तरनिरपेक्षस्वव्यवहारहेतुत्ववत् प्रकाशान्तर निरपेक्षस्वव्यवहारहेतुत्वम्.तदेवाह ज्ञानेनेत्यादिना."हृद्यन्तर्ज्योतिःपुरुषः" "यत्रायं पुरुषः स्वयं ज्योतिर्भवति विज्ञानघनः" "आत्मा ज्ञानमयः" "तच्च ज्ञानमयं व्यापि""स्वसंवेद्यमनुपममात्मसंवेद्यं तज्ज्ञानमिति ।

**आनन्दरूपत्वं सुखस्वरूपत्वम्, प्रबुद्धः ' सुखमहमस्वाप्स ' मिति प्रतिसंदधातीति सुखरूपं भवति.**

आनन्दरूपत्वमित्यादि . आनन्दरूपत्वं स्वतएवेष्टत्वम् . तच्च स्वभावत एवानुकूलत्वम् ।

अनुकूलं सुखं दुःखं प्रतिकूलमिति स्थिते ।
स्वात्मा स्वस्यानुकूलो हीत्यात्मसाक्षिक एव सः ॥

इत्युक्तप्रकारेण स्वस्य स्वयमेव सुखरूपं भवतीत्यर्थः . एवमात्मस्वरूपं सुखरूपमित्यत्र सुप्तप्रतिबुद्धप्रत्यभिज्ञां प्रमाणमाह प्रबुद्ध इत्यादिना. सुखमहमस्वाप्समिति प्रत्यभिज्ञैवात्र प्रमाणमिति

त्त्वशेखरे स्वयमेवावोचत् .सुषुप्तिदशायां परागर्थानुभवाभावात् प्रागर्थस्मरणसद्भावात् सुप्तोत्थितेन परामृश्यमानं सुखं स्वरूपसुखमेव भवेत् .इदानीं यथा सुखं भवति तथाऽ स्वाप्समिति 'सुखमहमस्वाप्स'-मितिप्रतिसंधानस्य विषय इति तु न युक्तम् , प्रतिपत्तिशरीरस्यातगात्वात् मधुरमगायमितिप्रतिपत्तितुल्यत्वात् . अमुमर्थं श्रीभाष्ये " एवं हि सुप्तोत्थितस्य परामर्शः सुखमहमस्वाप्समिति. अनेन प्रत्यवमर्शेन तदानीमप्यहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्वं च ज्ञायते . न च वाच्यम् यथेदानीं सुखं भवति तथा तदानीमस्वाप्समित्येषा प्रतिपत्तिरिति, अतद्रूपत्त्वात्प्रतिपत्ते " रिति भाष्यकारोप्याह. स्वरूपस्यानुकूलत्वाभावे प्रेमास्पदत्वं न स्यात् . " आश्चर्य्यवत्पश्यति कश्चिदेनमित्यादिभिश्चायमर्थः सिद्धः . " आर्द्रे ज्वलति निर्वाणमयमात्मा " " ज्ञानानन्दमयस्त्वात्मा " ज्ञानानन्दैकलक्षणमित्याद्यादिश्रुतिस्मृत्याद्यादिष्वात्मनो ज्ञानानन्दरूपत्वं सुस्पष्टम् . एवं प्रकृतेः परत्वोक्तेर्देहात्मवादो निरस्तः. अजडत्वानन्दरूपत्वोक्तेर्जडात्मवादो निरस्तः .

**नित्यत्वं सर्वकालवर्त्तित्वम् . सर्वकालसत्त्वे जन्ममरणाद्युपपत्तिः कथमिति चेन्न, जन्म देहसंबन्धो, मरणं देहवियोगः ।**

नित्यत्वमित्यादि . एतद्विरोधिशङ्कामनूद्य परिहरति सर्वकालेत्यादिना . आत्मा यदि सर्वकालवर्ती, तदा " प्रजापतिः प्रजा असृजत " " सन्मूलाः सोम्येमाः सर्वाः प्रजाः " " यतो वा इमानि भूतानि जायन्ते " यतः प्रसूता जगतः प्रसूतिस्तोयेन जीवान् विससर्ज[1] भूम्याम् " इत्यादिश्रुतिवाक्यैरुक्तमात्मनो जन्ममरणादिकं कथमुपपद्यत इत्यर्थः . जन्मेत्यादि. तत्रोक्तं मरणं देहवियोग इत्यर्थः . आत्मा नित्यश्चेत् सृष्टेः प्रागेकत्वावधारणं कथमुपपद्येतेति चेन्न, एकत्वं हि नामरूपवि-

---

(१) व्यससर्जेति पुस्तकस्थः पाठः, व्यससर्जेदितिक्वचित् ।

भागाभावोऽतो नानुपपत्तिः. संहारदशायामात्मनो ऽभावे ईश्वरास्यो-पादानत्वासंभवोऽकृताभ्यागमकृतविप्रणाशयोः प्रसङ्गश्च . अत आ-त्मनित्यत्वमवश्यं स्वीकार्य्यम् " न जायते म्रियते वा विपश्चित् " " ज्ञाज्ञौ द्वावजावीशानीशौ " नित्यो नित्यानाम् "

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि "

" न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोयं पुराणो
न हन्यते हन्यमाने शरीरे " ॥

इत्याद्य आत्मनित्यत्वप्रतिपादकाः श्रुतिस्मृतयादयो बहुशः सन्ति ॥

**अणुत्वं कथमिति चेत् , हृदयप्रदेशा-दुत्क्रमणगमनागमनानां शास्त्रेणोक्तत्वादणुत्वं भ-वति .**

अचिद्विलक्षणस्याजडस्यानन्दरूपस्य नित्यस्यात्मनो वि-भुत्वसम्भवादेवंभूतात्मस्वरूपस्याणुत्त्वं कथमिति जिज्ञासुप्रश्नमनु-वदति अणुत्त्वमित्यादिना .

तस्योत्तरमाह हृदयेत्यादिना. " हृदि ह्येवायमात्मेति हृदय-स्थितेः, "तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्द्ध्नो वा ऽन्य-भ्यो वा शरीरदेशेभ्य" इत्युत्क्रमणस्य, "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति गमनस्य, "तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण " इत्यागमनस्य च निर्दोषप्रमाणेन वेदान्तशास्त्रेण प्रतिपादितत्त्वात् अणुत्वं स्वीकर्त्तव्यमित्यर्थः . विभुत्वे एतत्सर्वं न सम्भवतीति भावः . सूत्रकारोप्यात्मनो ऽणुत्त्वं साधनावसरे " उ-त्क्रान्तिगत्यागतीना " मिति उत्क्रान्त्यादिभिरेव साधितवान्. " एषो-णुरात्मा चेतसा वेदितव्यः "

" बालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते " ॥
" आराग्रमात्रो ह्यवरोपि दृष्टः "

"स्वरूपमणुमात्रं स्याज्ज्ञानानन्दैकलक्षणम् ।
त्रसरेणुप्रमाणास्ते रश्मिकोटिविभूषिताः" ॥

इत्यादिश्रुतिस्मृत्यादिभिरप्यात्माणुत्वं सम्प्रतिपन्नम् ।

**नन्वणुर्हृदयदेशे तिष्ठति चेत्सर्वत्र शरीरे सुखदुःखे कथमनुभवतीति चेन्न, मणिद्युमणिदीपादीनामेकदेशस्थानां प्रभा यथा सर्वत्र व्याप्नोति, तथा ज्ञानं सर्वत्र व्याप्नोत्यतो न तद्भोगविरोधः. एकस्यैककाले ऽनेकशरीरपरिग्रहश्च ज्ञानव्याप्त्या ।**

नन्वेवं सति सर्वशरीरव्यापिसुखदुःखानुभवः कथं घटेतेति शङ्कामनुवदति नन्वित्यादिना . अयमात्माणुपरिमाणो हृदयप्रदेशमात्रे तिष्ठति चेत् पादे मे वेदना शिरसि मे वेदना पादे मे सुखं शिरसि मे सुखमित्यापादचूडं सर्वत्र शरीरे ऽविशेषेण सुखदुःखानुभवः कथमित्यर्थः ।

तस्या उत्तरमाह नेत्यादिना . मणिद्युमणिदीपादीनां प्रभावत्पदार्थानामेकदेशस्थानामपि प्रभा यथा सर्वत्र व्याप्नोति, तथाऽऽत्मनो हृदयप्रदेशे स्थितस्यापि तद्धर्मभूतं ज्ञानं सर्वत्र देहे व्याप्नोतीति सर्वत्र शरीरे सुखदुःखोपभोगस्य न काचित्प्रतिहतिरित्यर्थः. अयं च "गुणाद्वाऽऽलोकव" दितिसूत्रार्थः. वाशब्दो मतान्तरव्यावृत्त्यर्थः आत्मा स्वगुणेन ज्ञानेन सकलदेहं व्याप्याऽवस्थितः , आलोकवत् . यथा मणिप्रभृतीनामेकदेशवर्तिनामालोकोऽनेकदेशव्यापी दृश्यते तद्वद्धृदयस्थस्यात्मनो ज्ञानं सकलदेहं व्याप्य वर्तते. ज्ञातुः प्रभास्थानीयज्ञानस्य स्वाश्रयादन्यत्र वृत्तिर्मणिप्रभावदुपपद्यते इति प्रथमसूत्रे स्थापितमितिअत्र भाष्यम् . एवं ज्ञानव्याप्त्या सर्वं भुङ्क्त इत्ययमर्थो बृहदारण्यक उक्तः "प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया घ्राणं समारुह्य घ्राणेन सर्वान् गन्धानाप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति

प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वाञ् शब्दानाप्नोति प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वान् रसानाप्नोति प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति प्रज्ञयोपस्थं समारुह्योपस्थेनानन्दरतिं प्रज्ञां चाप्नोति प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा गतीराप्नोति प्रज्ञया धियं समारुह्य धिया विज्ञानं काममाप्नोति" इत्यभिधानात् .

नन्वेकस्मिन् शरीर एवमङ्गीकारेऽपि एकस्यैवैककालेऽनेकशरीरपरिग्रहः स्वरूपव्याप्तिमन्तरा न सम्भवति इत्याशङ्कायामाह एकस्येत्यादि . एकस्यानेकशरीरपरिग्रहः कालभेदेन सम्भवतीत्यतस्तद्व्यावृत्त्यर्थमेककाल इति. एककालेऽनेकदेहपरिग्रहः सौभरिप्रभृतिषु सम्प्रतिपन्नः ।

## अव्यक्तत्वं नाम घटपटादिग्राहिचक्षुराद्यग्राह्यत्वम् ।

अव्यक्तत्वमित्यादि , छेदनादियोग्यानि घटपटादीनि वस्तूनि यैः प्रमाणैर्व्यज्यन्ते तैरयमात्मा न व्यज्यत इत्यव्यक्त इति भाष्यकारैरुक्तं, तथैवायमाह. केनापि प्रमाणेन न व्यजत इत्यव्यक्तमित्युक्तौ तु तुच्छत्वं स्यात्. अतो मानसज्ञानमात्रगम्यं नत्वैन्द्रियकज्ञानगम्यमिति भावः . अव्यक्तशब्दार्थौ गत्वागत्वोत्तरोत्तरमित्यारभ्यात्मस्वरूपवैलक्षण्यमभिदधता दिव्यसूरिणापि ज्ञानमतिक्रान्तमितियैन्द्रियकज्ञानागोचरत्वमुक्तः ।

## अचिन्त्यत्वं नामाचित्सजातीयतया चिन्तयितुमनर्हत्वम् ।

अचित्यन्त्वमित्यादि. यतश्छेद्यादिविसजातीयस्तत एव सर्ववस्तुविजातीयत्वेन तत्तत्स्वभावयुक्ततया चिन्तयितुमपि नार्ह इति भाष्यकृतोक्तम , अयमपि तदेव वदति . अन्यथा अचिन्त्यत्वं केनापि प्रकारेण चिन्तयितुमयोग्यत्वमित्युक्तावात्मस्वरूपविषयश्रवणमननादिवैयर्थ्यप्रसङ्गः . तस्मादचित्सजातीयताबुद्ध्यनर्हत्वमेवा-

न्त्यशब्दार्थः . एव " मव्यक्तोयमचिन्त्योय " मिति गीतोपनिष-
ाचार्य्योक्तप्रकारेणात्मस्वरूपवैलक्षण्यप्रकटनार्थमनेनाप्यत्राव्यक्त-
ाचिन्त्यत्वे उक्ते ।

## निरवयवत्वं नामावयवसमुदायानात्मकत्वम् .

निरवयवत्वमित्यादि . विज्ञानमयो विज्ञान[1]मिति चोक्तप्र-
ारेण ज्ञानैकाकारतया ऽचिद्वस्तुवदवयवसंघातात्मकत्वाभाव
इत्यर्थः ।

## निर्विकारत्वं नामाचिद्वद्विकारत्वेन विनैकरूप-
तयावस्थानम् .

निर्विकारत्वमित्यादि. " अमृताक्षरं हरः " आत्मा शुद्धो
ऽक्षर " इत्यक्षरशब्दवाच्यवस्तुत्त्वात् क्षरण[2]स्वभावतया क्षरश-
ब्दवाच्याऽचिद्वद् विकारित्वं विना सदैकरूपेणावस्थानमित्यर्थः. अत
एवाऽविकार्योयमिति श्रीगीतोपनिषदाचार्य्यः ।

## एवंस्थितत्वाच्छस्त्राग्निजलवातातपप्रभृतिभि-
श्छेदनदहनक्लेदनशोषणादीनामयोग्यम् ।

एवंप्रकारत्वाच्छेद्यादिविसजातीयमित्याह एवंस्थितत्त्वादि-
यादिना. एवमित्यनेनाऽव्यक्तत्त्वादीनि चत्वारि निर्विकारित्वमा-
त्रं वा परामृश्यते. शस्त्राग्नीत्यादि. शस्त्राग्न्यादयश्छेदनदहनादिकं
यदा कुर्वन्ति तदा तत्तद्वस्तूनि व्याप्य कुर्वन्ति, आत्मनः सर्वाचि-
द्वस्तुव्यापकतया ततोप्यत्यन्तसूक्ष्मत्वात् व्याप्यानां स्थूलानां
तेषां व्यापकं सूक्ष्ममात्मवस्तु व्याप्यविकारयितुमनर्हत्वात्
शस्त्राग्निजलवातातपादिप्रयुक्तानां छेदनदहनक्लेदनशोषणानामनर्ह-
मित्यर्थः.

---

(१) विज्ञानं यज्ञं तनुते कर्माणि तनुते ऽपि चेतिवचनं प्रतीक्ष्यते ।
(२) क्षणक्षरणेति पुस्तकस्थःपाठः ।

" नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥
अच्छेद्यो ऽयम ऽदाह्यो ऽय ऽमक्लेद्यो ऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोयं सनातनः " ॥

इति गीयते ।

**आर्हता आत्मा देहपरिमाण इत्याहुः, तच्छ्रुतिविरुद्धम् . अनेकदेहान्परिगृह्णतां योगिनां स्वरूपस्य शैथिल्यं च प्रसज्येत ।**

एवं निर्विकारस्यात्मवस्तुनः परिणामित्वं वदतामार्हतान मतमयुक्तमिति दर्शयति आर्हता इत्यादि . आर्हता जैनाः. ते हि पादे मे वेदनेत्यादिप्रकारेणाऽऽपादचूडं देहे दुःखानुभवो देहपरिमाणत्वाभावे न सम्भवति. तस्मादात्मा स्वकर्मानुगुण्येन परिगृहीतानां गजपिपीलिकादिशरीराणामनुरूपं परिणम्य तत्तद्देहपरिमाणो भवतीति वदन्ति . तदेवाह देहपरिमाण इत्याहुरिति, तन्निराकरोति तदित्यादिना. अत्रानेन विवक्षिता श्रुतिरमृताक्षरं हर इत्यात्मनो निर्विकारत्वप्रतिपादिका . आत्मा देहपरिमाण इति पक्षो निर्विकार आत्मेति श्रुत्या बाधित इति तत्त्वशेखरे स्वयमुक्तत्वात् . " एषोणुरात्मा " वालाग्रशतभागस्येत्यादिश्रुतयो देहपरिमाणपक्षबाधिका अत्र विवक्षिता इत्यपि वदन्ति । एतद्विषये दूषणान्तरमाह अनेकदेहानित्यादिना. देहपरिमाणपक्षे संसिद्धयोगानां सौभरिप्रभृतीनामेककालेऽनेकदेहान् परिगृह्णतां स्वस्वरूपमनेकधा कृत्वा तत्तद्देहपरिग्रहप्रसङ्गः . यद्वा, परकायप्रवेशमुखेनानेकशरीराणि परिगृह्णतां योगिनां स्वरूपस्य स्थूलशरीरं त्यक्त्वा ततः सूक्ष्मशरीरपरिग्रहसमये तस्य सर्वस्यावकाशाभावाच्छैथिल्यं स्यादित्यर्थः . एवं चात्माऽकार्त्स्न्यमितिसूत्रोक्तप्रकारेणाल्पमहत्परिमाणानि गजपिपीलिकादिशरीराणि स्वकर्मानुगुणं परिगृह्णतां गजशरीरं त्यक्त्वा पिपीलिकाशरीरपरिग्रहसमये गजशरीरपरिमाणस्य स्वरूपस्य पिपीलिकाशरीरे ऽवकाशाभावाच्छै-

…तिर्यं स्यादिति योजना तु योगिनां स्वरूपस्येत्युक्त्या ऽत्रास्य ना-
…प्रेता ।

## ज्ञानाश्रयत्वं नाम ज्ञानस्याधारत्वम् .

ज्ञानाश्रयत्वमित्यादि . ज्ञानं नाम स्वसत्तामात्रेण स्वाश्र-
[१]स्वपरव्यवहारहेतुरात्मधर्मः . अस्यात्मन आधारत्वं च दी-
प्रभयोरुभयोरपि तेजोद्रव्यत्वेपि दीपस्य प्रभाश्रयत्ववदात्मनो
…नस्वरूपत्वेपि स्वधर्मभूतस्य यथा पृथक्स्थित्युपलम्भौ न
…यातां, तथा तदाधारत्वम्. " अथ यो वेदेदं जिघ्राणीति स आत्मा "
मनसैवैतान्कामान् पश्यन् रमते" "न पश्यो मृत्युं पश्यति" "विज्ञाता-
…मरे केन विजानीयात् जानात्येवायं पुरुषः" "एष हि द्रष्टा श्रोता घ्रा-
… रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः " " एवमेवास्य
…रिद्रष्टु " रित्यादिश्रुत्यादिभिरात्मनो ज्ञातृत्वं सिद्धम् ।

## आत्मा ज्ञानानाधारो ज्ञानमात्रमिति चेत्, …हं ज्ञानमित्येव प्रतिसंदधीत नत्वहं जानामीति ।

एवंभूतस्यात्मनो ज्ञातृत्वमनङ्गीकृत्य ज्ञानमात्रमात्मेति वदतां
…द्धादीनां मतं निराकर्तुं तन्मतमुत्क्षिपति–आत्मेत्यादिना. अहमिदं
…नामीति प्रत्यक्षेण तन्निराकरोति–अहमित्यादिना. आत्मनो ज्ञाना-
…यत्वं विना केवलज्ञानस्वरूपत्वं चेत्, अहं ज्ञानमिति स्वात्मनं ज्ञान-
…नैव प्रतिसन्दधीत नत्वहमिदं जानामीति ज्ञातृत्वेनेत्यर्थः . अमुम-
…महं जानामीत्युक्तौ विषयग्राहिणः कस्यचिज्ज्ञानस्य कश्चिदा-
…्रय इति ज्ञायते . एवमात्मनो ज्ञातृत्वं प्रत्यक्षसिद्धत्वादबाधित-
…ति भावः .

" अहमिदमभिवेद्मीत्यात्मविद्याविभेदे
स्फुरति यदि तदैक्यं बाह्यमप्येवमस्तु " ।

इति हि भट्टार्य्योपि बौद्धमतं निराचकार ।

---

( १ ) स्वाश्रयस्य स्वपरे ति पुस्तके पाठः ।

## ज्ञातेत्युक्तौ कर्त्ता भोक्ता चेत्युक्तः. कर्तृत्वभोक्तृत्वे ज्ञानावस्थाविशेषौ ।

ज्ञातृत्वकर्तृत्वभोक्तृत्वानां त्रयाणां वक्तव्यत्वेपि ज्ञाना... इति ज्ञातृत्वमात्रस्याभिधानमन्ययोरनभिधानं च कथं युज्यत इ... शङ्कायामाह ज्ञातेत्यादि. एवं प्रतिज्ञामात्रमयुक्तमिति तत्र हेतुम... कर्तृत्वेत्यादिना.

हेयोपादेयविज्ञानमूलं ज्ञातृत्वमात्मनः ।
तत्तत्प्रहाणोपादानचिकीर्षाकर्तृताश्रयाः ॥

इत्युक्तप्रकारेणात्मनो ज्ञातृत्वं हेयोपादेयप्रतिपत्तेर्हेतुः. त... द्धेयपरित्यागोपादेयपरिग्रहयोश्चिकीर्षा कर्तृत्वमूला. कर्तुर्हि चिकी... र्षा जायते. सा च चिकीर्षा ज्ञानावस्थाविशेषः. तया सह कर्तृत्व... ... प्रत्यासत्तिं दृष्ट्वा कर्तृत्वं ज्ञानावस्थाविशेष इत्युपचारः कृतः, ... न्यथा कर्तृत्वस्य क्रियाश्रयत्वरूपत्वात् तज्ज्ञानावस्थाविशेष इ... मुख्योक्तिर्न संभवति. क्रिया हि नाम जानाति इच्छति प्रयतते ... रोतीत्यत्र ज्ञानचिकीर्षाप्रयत्नानन्तरभाविनी प्रवृत्तिरूपा, तदाश्र... कर्तृत्वम् तच्च ज्ञानावस्थाविशेष इत्यौपचारिकप्रयोगो वक्तव्य... अथ भोक्तृत्वं नाम भोगाश्रयत्वम् भोगश्च सुखदुःखरूपानुभवज्ञान... तज्ज्ञानावस्थाविशेष एव. तदाश्रयत्वस्य ज्ञानावस्थाविशेषत्वोक्ति... श्चौपचारिक्येव. एवं ज्ञानस्य तस्य च विद्यमानप्रत्यासत्त्या तदैक... कथनसम्भवात्. ज्ञातृत्वोक्त्यैव कर्तृत्वभोक्तृत्वे चोक्ते इत... न कोपि विरोधः ।

## केचिद् गुणानामेव कर्त्तृत्वं नात्मन इति वद... न्ति,तदाऽस्य शास्त्रवश्यत्वं भोक्तृत्वं च न स्यात्

एवमात्मनः स्वाभाविकं कर्तृत्वं नास्ति, किंतु प्रकृतेरे... तदिति वदतः सांख्यान् प्रतिक्षिपति केचिदित्यादिना. केचि... दित्यनेन तेष्वस्यानादरो ज्ञायते. गुणानामिति. गुणाः प्रकृतिश्च... तन्मते भेदो नास्ति. तस्मात्प्रकृतेरेवेत्यत्र गुणानामेवेत्युक्तम्. मू...

कृतिर्नाम सुखदुःखमोहात्मकानि लाघवप्रकाशचलनोपष्टम्भनगौ-
ावरणकार्याण्यतीन्द्रियाणि कार्य्यैकनिरूपणविवेकान्यन्यूनानति-
काणि समतामुपेतानि सत्वरजस्तमांसि द्रव्याणि इति तेषां सि-
ान्तः. तथाच प्रकृतेरेव कर्तृत्वं नात्मन इत्यर्थः. अत्र कठवल्ल्यां
न जायते म्रियते वे" त्यादिना ऽऽत्मनो जन्ममरणादिप्रकृतिध-
ान् प्रतिषिध्य

"हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते" ॥

इति हननादिक्रियासु कर्तृत्वनिषेधात्. श्रीगीतायां च स-
श्वरेण

"नान्यं गुणेभ्यः कर्त्तारं यदा द्रष्टा ऽनुपश्यति" ।
"कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" ।

इति स्वयमेवोक्तत्वात्. एवमध्यात्मशास्त्रेषु आत्मनो भो-
क्तृत्वस्य गुणानां कर्तृत्वस्य चाभिधानात् कर्तृत्वं प्रकृतेरेवात्म-
ास्तु न कर्तृत्वमपि तु भोक्तृत्वमेवेति ते वदन्ति,

तन्निराकरोति तदेतचादिना. यदि प्रकृतेरेव कर्तृत्वं नात्मन-
तदाऽस्य विधिनिषेधरूपशास्त्राधिकारितया तद्वत्त्वं विहितनिषि-
द्धकरणप्रयुक्तसुखदुःखरूपफलभोक्तृत्वं च न स्यादित्यर्थः. चे-
तनस्याकर्तृत्वे शास्त्रवैयर्थ्यप्रसङ्गः "शास्त्रफलं प्रयोक्तरि" "कर्ता
शास्त्रार्थवत्त्वा" दित्युक्तम्. स्वर्गकामो यजेत" मुमुक्षुर्ब्रह्मोपासीतेति
स्वर्गमोक्षादिफलभोक्ता हि कर्तृत्वेन शास्त्रेण नियुज्यते. तस्मात्फल-
भोक्त्रैव कर्त्रा भवितव्यम्. अचेतनस्यैव यदि कर्तृत्वं तदा चेत-
नमधिकृत्य विधिर्न सम्भवति. शासनाच्छास्त्रमुच्यते. शासनं
प्रवर्तनम्. शास्त्रस्य प्रवर्त्तकत्वं बोधजननद्वारा. अचेतनस्य प्रधानस्य
बोधोत्पादनं न सम्भवति. अतः शास्त्रस्यार्थवत्त्वे भोक्तुश्चेतन-
स्यैव कर्तृत्वं वक्तव्यम्. एतत्सर्वमाभिप्रेत्य तदाऽस्य शास्त्रवश्यत्वं
भोक्तृत्वं च न स्यादित्युक्तम्.

## सांसारिकप्रवृत्तिषु कर्त्तृत्वं न स्वरूपप्रयुक्तमपितु

## गुणसंसर्गकृतम् . कर्त्तृत्वं चेश्वराधीनम् ।

तर्हि कर्तृत्वं सर्वमस्य स्वरूपप्रयुक्तं किमितयाशङ्काया सांसारिकेत्यादि . सांसारिकप्रवृत्तयः अयनपानादिभोगानु क्रियमाणाः स्वव्यापाराः, तत्र कर्तृत्वधर्माद्यधिकत्वात्स्वरूप न भवतीतयर्थः . तर्हि तदस्य किंप्रयुक्तमितयत आह गुणेत्य गुणाः सत्वरजस्तमांसि तेषां संसर्गेण भवतीतयर्थः .

" प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।

अहंकारविमूढात्मा कर्त्ताहमिति मन्यते ॥

इति गीतम्. एतत्सर्वं "कर्त्ता शास्त्रार्थवत्त्वादितिसूत्रव्या पूर्वपक्षसिद्धान्तरूपेण भाष्यकृद्विस्तरेण स्वयमवोचत् . एवं सां पक्षं निराकृतयात्मनः कर्तृत्वं प्रसाधितम् .

एतच्च किं स्वायत्तं किं वा परायत्तमितयाशङ्काया कर्तृत्वं चेत्यादि. इदंचात्मनः कर्तृत्वं न स्वाधीनमपि श्वराधीनमितयर्थः. " परात्तु तच्छ्रुते " रितिवेदान्तसूत्रेणा नः कर्तृत्वं परायत्तमितिश्रुतिसिद्धमित्युक्तम् . शास्त्रार्थवत्त्व कर्तृत्वमात्मधर्म इति स्वीकर्त्तव्यम् . तस्य कर्तृधर्मभूतानां ज्ञाने प्रयत्नानां भगवदधीनत्वात तेषां ज्ञानादीनां भगवदनुमतिं वि क्रियाहेतुत्वासम्भवात् , अस्य कर्तृत्वमीश्वराधीनमित्युच्यते . बुद्धिपूर्वमप्रयत्नमपेक्ष्येश्वरेणानुमतिकरणात्तत्क्रियानिबन्धनानि ण्यपापान्यपि चेतनस्यैवेति विवरणे कृष्णपादैरुक्तम् . कर्तृत्वस्य रमात्माधीनत्वेपि विधिनिषेधवाक्यानां न वैयर्थ्यं " कृतप्रयत्नापेक्ष स्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य " इति परिहृतत्वात् . अय मर्थः, विधिनिषेधानां वैयर्थ्याप्रसक्तये चेतनकृतप्रथमप्रयत्नमपेक्ष्ये श्वरः प्रवर्त्तयतीति . तथाहि, सर्वेषां चेतनानां ज्ञातृत्वस्य स्व भावत्वात् सामान्येन प्रवृत्तिनिवृत्तियोग्यत्वमस्ति . एवंभूतस्वरूप निर्वाहायेश्वरोऽन्तरात्मतया तिष्ठति, तदाहितस्वरूपशक्तिश्चेतनस्त त्तत्पदार्थेषूत्पन्नज्ञानचिकीर्षाप्रयत्नो वर्तते, तत्र मध्यस्थत्वादुदासी नवद्वर्त्तमानः परमात्मा तेषां चेतनानां पूर्ववासनानुरूपायां विधि निषेधप्रवृत्तावनुमत्यनादराभ्यां युक्तविहितेष्वनुग्रहं निषिद्धेषु नि ग्रहं च कुर्वन्ननुग्रहात्मकस्य पुण्यस्य फलं सुखं निग्रहात्मकस्य प

प फलं दुःखं च तत्तच्चेतनानां ददाति. अमुमर्थमभियुक्ता पि वदन्ति

" आदावीश्वरदत्तयैव पुरुषः स्वातन्त्र्यशक्त्या स्वयं
तत्तज्ज्ञानचिकीर्षणप्रयतनान्युत्पादयन् वर्त्तते ।
तत्रोपेक्ष्य ततो ऽनुमत्य विदधत्तन्निग्रहानुग्रहौ
तत्तत्कर्मफलं प्रयच्छति ततः सर्वस्य पुंसो हरिः " ॥

इति . आदौ सर्वनियन्त्रा सर्वान्तर्यामिणा सर्वेश्वरेण स्वस्यो-द्य दत्तया ज्ञातृत्वरूपया शक्त्या ऽयं पुरुषः स्वयमेव तत्तद्विषये-ज्ञानचिकीर्षाप्रयतनानि कुर्वन् तिष्ठति, तत्राशास्त्रीयेषूपेक्षां शा-येष्वनुमतिं च कृत्वा तत्तद्विषयेषु निग्रहानुग्रहौ कुर्वन् तत्त-र्मफलं च सर्वेश्वरो ददातीत्यर्थः. एवं सर्वप्रवृत्तिषु चेतनस्य मप्रयत्नमपेक्ष्य परमात्मा प्रवर्त्तयतीत्युक्तमित्यादिना दीपप्रकाशे देकेसरिभिरुक्ता अर्था अत्रानुसंधेयाः । ननु तर्हि " एष एव धु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु र्म कारयति तं यमधो निनीषति " इत्युन्निनीषयाधोनिनीषया च र्वेश्वरः स्वयमेव साध्वसाधुकर्माणि कारयतीति कथमुपपद्यत ते चेन्न, इदं न सर्वसाधारणं किन्तु यः पुरुषो भगवद्विषयेऽति-त्रानुकूल्ये व्यवस्थितः प्रवर्त्तते, तस्य भगवान्स्वयमेव स्वप्राप्त्यु-येष्वतिकल्याणेषु कर्मसु रुचिमुत्पादयति, यस्त्व ऽतिमात्रप्राति-ल्ये व्यवस्थितः प्रवर्त्तते तस्य स्वप्राप्तिविरोधिष्वधोगतिसाधनेषु र्मसु सङ्गं कारयति इति एतच्छ्रुतिवाक्यार्थः. अमुमर्थं सर्वे-रः स्वयमेवाह

" अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विता इत्यारभ्य
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति
असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरमित्यारभ्य
मामात्मपरदेहेषु प्रद्विषन्तो ऽभ्यसूयकाः ॥

इत्यन्तं तेषां प्रातिकूल्यातिशयमुक्त्वा

तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।

इति चोक्तत्वात्. तस्मादनुमन्तृत्वमेव सर्वसाधारणं, प्रये जकत्वं विशेषविषयमित्येव स्वीकार्य्यम्. "कृतप्रयत्नापेक्षस्त्वितिसू व्याख्याने एतत्सर्वं भाष्यकृता स्वयमेवोक्तम्. एतत्सर्वमभिप्रेत, कर्तृत्वमीश्वराधीनमित्युम् ।

एवमेतावता ज्ञानाश्रयत्वं नाम ज्ञानस्याधारत्वमिति थममात्मनो ज्ञातृत्वमुक्त्वा ज्ञानमात्रमात्मेति वादिनो निर त्य ज्ञातृत्वकथनानन्तरं कर्तृत्वभोक्तृत्वयोर्वक्तव्यतया तदुभ मपि ज्ञातृत्वबलेन स्वत एवोक्तमिति दर्शयित्वा गुणस् कर्तृत्वं नात्मन इतिवादिनो निराकृतचात्मनः कर्तृत्वं स्थापयि तत्र कर्तृत्वे स्वरूपाप्रयुक्तांशमऽस्य तदागमनहेतुं चोक्त्वा एवं मात्मनः कर्तृत्वं स्वसर्वावस्थायामपीश्वराधीनमित्युक्त्वा न्यगमय एतत्सर्वमात्मनो ज्ञानाश्रयत्वकथनेनार्थात्संगतम् ।

**ज्ञानाश्रयश्चेदयं शास्त्रेषु ज्ञानत्वेन कथन्निर्दि श्यते, ज्ञानेन विनास्य प्रकाशात् ज्ञानस्य सा भूतगुणत्वेन निरूपकधर्मतया तथा निर्दिश्यते ।**

नन्वेवमात्मा ज्ञानाश्रयश्चेत् "यो विज्ञाने तिष्ठन् ,विज्ञानमय विज्ञानं यज्ञं तनुते " इति

ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।

विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः " इति शास्त्रे ष्वयं ज्ञानमिति कथमुच्यत इति जिज्ञासुप्रश्नमनुवदति ज्ञानाश्रयश्चे दितचादिना. शास्त्रेष्वेवंनिर्देशस्य मूलमाह ज्ञानेनेतचादिना. ज्ञानस्य स्वाश्रयं प्रति स्वयंप्रकाशत्ववज्ज्ञाननिरपेक्षमात्मनोपि स्वंप्रति स्वयंप्र काश त्वाज्ज्ञानस्य ज्ञानाश्रयस्य सारभूतगुणात्वात् स्वरूपानुबन्धि त्वेन स्वरूपनिरूपकधर्मत्वात् तथा निर्दिश्यत इत्यर्थः. अयमर्थ " तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत् " यावदात्मभावित्वाच्च न दो षस्तद्दर्शनात् " इतिसूत्राभ्यामुक्तः. ज्ञानमात्रव्यपदेशस्तु ज्ञानस्य

ज्ञानगुणत्वात् स्वरूपानुबन्धित्वेन स्वरूपनिरूपकगुणत्वाज् ज्ञानव-
स्वयंप्रकाशत्वाच्चोपपद्यते इति दीपे भाष्यकारैरुक्तम् .

## नियाम्यत्वं नामेश्वरबुद्ध्यधीनसकलव्यापारत्वम् .

नियाम्यत्वमित्यादिना " य आत्मनि तिष्ठन् य आत्मान-
मन्तरो यमयति स ते आत्मान्तर्य्याम्यमृत " इत्याद्युक्तप्रका-
रेणान्तरात्मतया नियमनस्येश्वरस्य सर्वकालीनत्वात् इदमात्मवस्तु
तस्य नियाम्यं भवति शरीरस्य सकलप्रवृत्तयोपि यथा शरीरिणो
बुद्ध्यधीना भवन्ति, तथा शरीरभूतस्यात्मवस्तुनः सकलव्यापारा अ-
स्य शरीरिणः परमात्मनो बुद्ध्यधीना भवन्तीतिभावः.एवं तच्छरीरत-
या तदधीनसकलप्रवृत्तिकत्वेपि अचेतनशरीरवत् स्वयं किंचित्प्रवृत्ति-
कर्तुमसामर्थ्याभावाज् ज्ञातृत्वभोक्तृत्वस्वभाविकधर्मकत्वेन ज्ञानचि-
कीर्षाप्रयत्नपूर्वकप्रवृत्तिक्षमत्वात् सकलप्रवृत्तिष्वप्यस्य प्रथमप्रयत्न-
मपेक्ष्येश्वरेणानुमतिदानान्न विधिनिषेधशास्त्रवैयर्थ्यम् . एतत्प्रवृत्तिमू-
लेश्वरेण क्रियमाणयोर्निग्रहानुग्रहयोस्तदनुगुणफलप्रदानस्य च
विरोध इत्ययमर्थः प्रागुक्तः ।

## धार्य्यत्वं नाम तत्स्वरूपसंकल्पव्यतिरेकप्रयुक्तस्वसत्ताव्यतिरेकयोग्यत्वम् .

धार्य्यत्वमित्यादि . " एष सेतुर्विधरणः " ; " तत्स-
र्वं प्रज्ञाने प्रतिष्ठितम् " " एवमेव चास्मिन्नात्मनि सर्वाणि भूतानि
सर्व एवात्मानः समर्पिता " " एतस्य वाअक्षरस्य शासने गार्गि सू-
र्य्याचन्द्रमसौ विधृतौ तिष्ठतः इत्याद्युक्तप्रकारेणेश्वरस्य सकल-
चेतनानामपि धारकत्वात् एतदात्मवस्तुनो धार्य्यत्वात् स्वस्य नि-
यमेन धारकस्य सत्ताहेतोस्तस्य दिव्यात्मस्वरूपस्य एतत्स्वरूपा-
श्रयत्वस्य सत्तानुवृत्तिरूपस्थितेश्च हेतोस्तस्य नित्येच्छाकार्य्यस्य
नित्यसंकल्पस्य च व्यतिरेके स्वसत्ताहानिसम्भवार्हत्वमित्यर्थः .
एवं धार्यवस्तूनि स्वरूपसंकल्पाभ्यां धत्त इत्ययमर्थोभियुक्तैरपि

विस्तरेण प्रतिपादितः. तथाहि ईश्वरःस्वस्वरूपनिरूपकधर्माणां
रूपितस्वरूपविशेषणानां गुणानामिव स्वव्यतिरिक्तसमस्तद्रव्य
णामप्यव्यवधानेन स्वरूपेण धारको भवति, तत्तद्द्रव्याश्रितगुणा
तत्तद्द्रव्यद्वारा धारको भवति जीवैर्ध्रियमाणानां शरीराणां जीव
राधारक इति केचिदाचार्या वदंति जीवान् द्वारीकृतच स्वरूपेण
धारको भवतीति केचिदाचार्या वदन्ति. एवं सर्वेषामप्याश्रयापेक्ष
ऽपृथक्सिद्धविशेषणत्वादेतेषां सत्तादय आश्रयसत्ताधीनाः. स
वस्तूनां सत्तायाः संकल्पाधीनत्वं नाम अनित्यानामनितयेच्छाधी
नोत्पत्तिकत्वं नित्यानां नित्येच्छाधीनसिद्धिकत्वम्. अमुमर्थं "इच्छा
एव तव विश्वपदार्थसत्ते " ति श्लोकेनाभियुक्ता विवेचि
वन्तः. एतेन सर्वेषामपि सत्तानुवृत्तिरूपायाः स्थितेरीश्वरेच्छाधी
नत्वात् सर्वमपीश्वरसङ्कल्पाश्रितमित्युक्तं गुरुद्रव्याणि सङ्कल्
धृतानीति शास्त्रेणोच्यते

" द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्य्येण विधृतानि महात्मनः " ॥

इत्युक्तप्रकारेण क्वचिद्देशविशेषे प्रच्युतिस्थापनमपेक्ष्य प
मिच्छाधीनसत्तास्थितिप्रवृत्तिकानां वस्तूनां परमात्मस्वरूपेण किं
यत इति चेत्परमात्मन इच्छा एतानि परमात्मस्वरूपाश्रितानि कर
ति, एवं सर्वाण्यपि विस्तूनीश्वरस्वरूपाधीनानीश्वरेच्छाधीनानि ति
ष्ठन्ति. लोकेऽपि शरीरं शरीरिणः स्वरूपाश्रयं सङ्कल्पाश्रयं
पश्यामः. एतदवस्थानकाले विद्यमानत्वात् एतद्वियोगकाले नष्टत्व
त्स्वरूपाश्रयम्. अयमर्थः संकल्पशून्यसुषुप्तत्याद्यवस्थासु सुवि
शदजागरादिदशासु सङ्कल्पेनाप्रच्युतिधारणे संकल्पाश्रितमित्युक्त
मिति रहस्यत्रयसारे प्रतिपादितत्वात्.

**शेषत्वं नाम चन्दनकुसुमताम्बूलादिवत्तस्ये**
**ष्टविनियोगार्हत्वम्. इदं च गृहक्षेत्रपुत्रकलत्रादि**
**वत्पृथक्स्थित्यादीनां योग्यं न भवति किंतु शरीर**
**वत्तदयोग्यं भवति ।**

शेषत्वमित्यादि. चन्दनकुसुमादिपदार्थानां यथास्वार्थताले-

स्ति, लिम्पतो दधतश्चोपयोगः. स्वार्थे विनियुञ्जानः
ानां दद्यात्तथा यथेष्टविनियोगार्हत्वं भवति, तथा चे-
ुत्वेपि स्वप्रयोजनगन्धो नास्ति स्वस्य स्वरूपस्वभाववैल-
दिभिः सर्वैरपि हि शेषिणो[1]ऽतिशयकरत्वम्. विनियोगदशायां
स्वार्थे विनियुङ्क्ष्वादू[2] दासानां मां दासं कुरु[?] विमल इत्यु-
प्रकारेण स्वाभिमतानामप्युपयुक्तं कुर्यात् तथा यथेष्टविनियोगार्ह-
मित्यर्थः. अचिद्द्रव्यस्य चिद्द्रव्यदृष्टान्तत्वाभिधानं पारतन्त्र्या-
ायद्योतनार्थम्. आत्मस्वरूपयाथात्म्यस्यैतादृशत्वात्प्राप्यरूपनि-
र्षकरणावसरे स्वार्थमेव मां स्वीकुर्विति दिव्यसूरिभिरुक्तम्.
गताऽतिशयाधानेच्छयैवोपादेयत्वमेव यस्य स्वरूपं स शेषः, परः
ी' ति शेषशेषित्वलक्षणं भाष्यकारैरुक्तम्. एतल्लक्षणवाक्यम-
तच

इच्छया यदुपादेयं यस्यातिशयसिद्धये ।
उभयानुभयैकैकजुषा तौ शेषशेषिणौ ॥

इति शेषशेषिलक्षणमभियुक्ता अप्यवदन् ।

यथेष्टं विनियोगार्हः शेषशब्देन कथ्यते ॥
ईश्वरेण जगत्सर्वं यथेष्टं विनियुज्यते ॥

इत्युक्तत्वात् शेषत्वं यथेष्टं विनियोगार्हत्वमिति शास्त्रसि-
. एवमीश्वरविषये आत्मनः शेषत्वं, यस्यास्मि न तमन्त-
[3],

"परवानस्मि काकुत्स्थ त्वयि वर्षशतं स्थिते" ।
"दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः ।
नान्यथा लक्षणं तेषां बन्धे मोक्षे तथैव च" ॥
"स्वोज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर ॥

इत्यादिश्रुतिस्मृत्यादिभिरुक्तम्. कस्यचिद्गृहक्षेत्रादीनां
ीरस्य च शेषत्वेपि गृहक्षेत्रादयः पृथक्स्थित्यादेरर्हाः शरीरं त-

---

(१) विशेषिणोऽतिशयकरत्वमिति पुस्तकस्थःपाठः ।
(२) वियुंक्ता-इति पुस्तके पाठः ।
(३) यस्यास्मिनतमन्तरेमीति पुस्तके पाठः ।

दनर्हं दृश्यते, इदमात्मवस्त्वीश्वरस्य शेषं कथमिति शङ्काय
चेतत्यादि. इदम्एवमीश्वरशेषतयोक्तमात्मवस्तु. गृहक्षेत्रकल
त्यत्रादिशब्देन धनधान्यारामदासदासीवर्गा उच्यन्ते. पृथ
द्ध्यादीनां योग्यं न भवतीतयत्र पृथक्सिद्धिर्नाम सहोप
भनियमं विना शेषिणं विहाय सिद्धिः. आदिशब्देनानेकसाध
ण्यमुच्यते. गृहक्षेत्रदासदासीप्रभृतयः पितृपुत्रज्येष्ठकनिष्ठा
नां साधारणशेषाः, पुत्रो मातापितृपितृव्यादीनां साधारणशेषः,
लत्रं च

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः।
तृतीयोग्निष्टे पतिस्तुर्य्यस्ते मनुष्यजाः" ॥

इति पाणिग्रहणानन्तरं सोमादीनां शेषतयाभिहितत्वा
कसाधारणं भवति. एतद्विलक्षणम् शरीरवत्तद्योग्यत्वं नाम अपृथ
सिद्धानन्यसाधारणशरीरवत्पृथक्सिद्ध्यादीनामऽनर्हत्वम्. पृथ
क्स्थित्यादीनामिति पाठे आदिशब्देन पृथगुपलम्भ उच्यते. तदा
मपि गृहक्षेत्रकलत्रादिवत्पृथक्स्थितेः पृथगुपलम्भस्य च योग
विना शरीरवत्तदुभयानर्हत्वमिति हृदयम्. अयमेवात्मशरीरभ
पृथक्सिद्ध्यनर्होधाराधेयभावो नियन्तृनियाम्यभावः शेषशेषि
इति, यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं
शक्यं तच्छेषतैकस्वरूपं। तत् तस्य शरीरमिति च वेदार्थसं
श्रीभाष्ये चात्मशरीरभावलक्षणतया भाष्यकारैरुक्तम्. नि
नियाम्यभाव आधाराधेयभावः शेषशेषिभाव इत्येतत्त्रयमत्रो
म्. अतो "यस्यात्मा शरीरं" "यस्याक्षरं शरीरं"।
तत्यादिश्रुतिसिद्धमात्मनः परमात्मनः शरीरत्वमर्थादुक्तम्. प
मात्मस्वरूपशोधनं कृतम् ॥

**आत्मस्वरूपं च बद्धमुक्तनित्यभेदेन त्रिविध**
**बद्धा इत्युच्यन्ते संसारिणः. मुक्ता निवृत्तसंसारा**
**नित्या इत्युच्यन्ते कदापि संसारमप्राप्ताः शेषशे**
**शनादयः ।**

वत आकस्मिककृपयोपायान्तरविषये दुष्करत्वादिबुद्धि... दनमूलकभगवत्प्रसादेन वा सांसारिकसकलदुरितेषु ... विर्भूतस्वरूपा भगवत्कैङ्कर्य्यैकभोगाश्चेतनाः. अविशेषेण ... सारबन्धानामेव मुक्ता इत्यभिधानात्, भगवदनुभवे रुचि... तत्समाश्रयणं कृत्वा संसारनिवृत्तिं कृत्वा देशविशेषं ... स्वस्वरूपानुभवं कुर्वाणाः केवला अप्युच्यन्ते।

अथ नित्याः क इत्याकाङ्क्षायामाह नित्या इत्यादिना. ... दापि संसारमप्राप्ता इत्युक्त्या मुक्ता व्यावर्त्यन्ते. ते हि निवृत्त... साराः, एते ह्यस्पृष्टसंसारगन्धाः "अहतसहजदास्याः सूरिणः[1] ... स्तगन्धा विमलचरमदेहा" इति भट्टार्य्याः "नित्यो नित्... नां, ज्ञाज्ञौ द्वावजावीशानीशा" वित्युक्तप्रकारेणात्मस्वपरूस्य ... त्यत्वेपि "असम्भवे" त्युक्तिः, "सन्तमेन" मित्युक्ति... श्च भगवद्विषयज्ञानराहित्यसाहित्याभ्यां खलु. तस्मादेतेषां ... त्यत्वाभिधानं भगवज्ज्ञानस्य कदापि संकोचाभावादिति स्वीक... व्यम्. अत एव "यत्र पूर्वे साध्याः सन्ति देवा" इति "य... षयः प्रथमजा ये पुराणा" इति च श्रुतिरेताञ् श्लाघते, भाष्यका... श्चैतेषां वैभवं स्वच्छन्दानुवृत्तीत्यादिभिर्गद्ये विस्तरेणावोचत्. अ... कदापि संसारमप्राप्ता इत्येनेनैतेषां सर्वोपि विभव उक्तः. अशे... शेषवृत्तिष्वप्यन्वितत्वात्कैङ्कर्य्यपराणां सर्वेषां प्रधानत्वाच्चानन्तः ... ष इत्युच्यते.

निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः।
शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीर्य्यते जनैः॥

इति यामुनाचार्य्यैरुक्तम्. इतरतदीयवदऽनियमं विना स... श्वरभुक्तशेषं विना किंचिदपि न भुङ्क्त इति नियमेन सेनानी शे... षाशन इति निरूप्यते. "त्वदीयभुक्तोज्झितशेषभोजिना" इति ... यामुनाचार्य्याः, "वनाद्रिनाथस्य सुसुन्दरस्य वै प्रभुक्तशिष्ट... श्यथ सैन्यसत्पतिरिति कूरेशः. आदिशब्देन "शेषशेषाशनग... रुडप्रमुखनानाविधानन्तपरिजनपरिचारिकापरिचरितचरणयुगल

(१) सूरिशब्द इदन्तवदिन्नन्तोऽपि।

भूतात्मस्वरूपस्यानाद्यऽचित्संबन्धतद्वियोगतदनन्वयैर्बद्ध-रूपेण त्रैविध्यमाह आत्मस्वरूपं चेत्यादिना. तत्र बद्धाः काङ्क्षायामाह बद्धा इत्यादि. ते च तिलतैलवद्दारुव-र्विवेचगुणत्रयात्मकानादिभगवन्मायातिरोहितस्वरूपा अना-द्यासंचितानन्तपुण्यपापरूपकर्मवेष्टितास्तत्तत्कर्मानुगुणविविध-ब्रह्मदेवादिरूपदेहविशेषप्रविष्टास्तत्तद्देहेष्वहंबुद्धिं देहानुबन्धिषु ताबुद्धिं च कुर्वाणा दुर्वासनारुचिविवशाः स्वस्वकर्मानुगुणसुख-खपरंपरामनुभवन्तः ।

ननु मुक्ताः के इत्याकाङ्क्षायामाह मुक्ता इत्यादि. ते, चा-देकर्मप्रवाहप्रयुक्ते संसारसंबन्धे वर्त्तमाने मोक्षरुचिप्रतिबन्धके विशेषे ऽनुभवेन वा सामान्येनानुष्ठितैः प्रायश्चित्तकर्मभिर्वा ऽन-भिहितफलैरत्युत्कटैः प्रामादिकपुण्यैर्वा नष्टे तेन हेतुना जायमान-यां भगवत्कटाक्षेण जातेन सत्त्वोद्रेकेण मोक्षरुचौ जातायां रुसमाश्रयणसंप्राप्तवेदान्तवेद्यपरब्रह्मज्ञानात्तत्प्राप्तिरूपमोक्षसिद्ध्य-स्वर्णाश्रमोचितानि कर्माणि फलसङ्गकर्तृत्वत्यागपूर्वकमनुष्ठाय धर्मेण पापमपनुदति " " कषाये कर्मभिः पक्वे ततो नं प्रवर्त्तते " इत्युक्तप्रकारेण तादृशसत्कर्मानुष्ठानेन ज्ञानोत्प-विरोधिप्राचीनकर्मक्षये सति निर्मले चान्तःकरणे भगवदेकालम्-नि सम्यग्ज्ञाने चोदिते अनन्तरं

" जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते " ॥

इत्युक्तप्रकारेण बहुतरजन्मसाध्यकर्मज्ञानाभ्यामुत्पन्नतैलधाराव-विच्छिन्नस्मृतिसंतानरूपभक्तिमूलभगवत्प्रसादेन वा स्वीयनिर्हेतु-सौहार्दविशेषेण यादृच्छिकसुकृतपरंपराः कल्पयित्वा[1] तद्धेतुकं विशेषकटाक्षं कृत्वा ऽनन्तरमऽद्वेषमुत्पाद्याभिमुख्यं जनयित्वा सा-त्त्विकसम्भाषणं कारयित्वा तन्मार्गेण सदाचार्यै समाश्रयणं कार-यित्वा तन्मार्गेण वा स्वीयविशेषकटाक्षेण वा तत्त्वज्ञानमुत्पाद्य म-हाविश्वासपूर्वकं स्वचरणावेवोपायावित्यध्यवसाये स्थापयतो भग-

(१) कल्पित्वा तद्धेतुकं विशेषकटाक्षकामिति पुस्तके पाठः ।

[उ]क्तप्रकारेण भगवत्कैङ्कर्यैकभोगा वैनतेयप्रमुखा नित्यसिद्धा [उच्]यन्ते ।

**जलस्याग्निसंसृष्टस्थालीसंसर्गेण यथौष्ण्यश-[ब्]दादयो जायन्ते, तथात्मनोऽचित्संबन्धेनाऽविद्या-[क]र्म्मवासनारुचयो जायन्ते, अचिन्निवृत्तावविद्याद-[य]ो निवर्त्तन्त इति वदन्ति ।**

पूर्वोक्तस्वरूपवैलक्षण्यवत आत्मनो, विद्यादिदोषसंबन्धस्य-[को] वा हेतुरित्याकाङ्क्षायां तद्धेतुं सदृष्टान्तमाह जलस्येत्यादिना. [स्व]भावत एव निर्विकारस्यर शीतलस्य जलस्याऽग्निना संसृष्टाया [स्थाल्]याः संसर्गेणौष्ण्यशब्दोद्रेकरूपविकारा जायन्ते, तथा स्वतो-[ज्ञ]ानन्दामलस्वरूपस्यात्मनो गुणत्रयाचित्संबन्धेनाविद्याकर्मवा-[सन]ारुचयो जायन्त इत्यर्थः. अस्यानुजोप्याचार्य्यहृदये ऽविद्या-[दिका]रणमनाद्यचित्संबन्ध इत्यवोचत्. एवं श्रीविष्णुपुराणे

> निर्वाणमय एवात्मा ज्ञानानन्दमयो ऽमलः ।
> दुःखाज्ञानमला धर्म्माः प्रकृतेस्ते न चात्मनः ॥
> जलस्येवाग्निसंसृष्टस्थालीसंगात्तथापि हि ।
> शब्दोद्रेकादिकान् धर्म्मान् तत्करोति यथा मुने ॥
> तथात्मा प्रकृतेः सङ्गादहंमानादिदूषितः ।
> भजते प्राकृतान् धर्म्मान ऽन्यस्तेभ्योपि सोऽव्ययः ॥

इत्युक्तम्. अत्राविद्या अज्ञानम्, तच्च ज्ञानानुदयान्यथाज्ञा-[नव]िपरीतज्ञानरूपेणानेकविधम्. कर्म करणत्रयकृतः पुण्यपापात्मकः [क्रि]याविशेषः, तत्र पुण्यमैहिकामुष्मिकनानाविधभोगसाधनतया ब-[हुव]िधम्. पापम ऽकृत्यकरणकृत्याकरणभगवदपचारभागवताप-[चा]रसह्यापचाररूपेणानन्तविधम्: वासना पूर्वं कृतेषु पुनश्चाभिनिवे-[श]स्य हेतुः संस्कारः. इयं च हेतुभेदेन बहुविधा. रुचिः रसान्तरेणा-प्रतिनिवृत्तः कुत्रचिज्जायमान आदरः. इयं च विषयभेदेन बहुबिधा. अविद्याकर्मवासनारुचयो जाता इत्यनुक्त्वा जायन्त इत्युक्त्या तासां

प्रवाहरूपत्वमुक्तम्. एवमात्मान औपाधिका अविद्यादयः कस्य मवस्थायां निवर्त्तन्ते इत्याकाङ्क्षायामाह अचिदित्यादि. कारणा वृत्त्या कार्य्यनिवृत्तेरचित्संबन्धनिबन्धना एता अपि तत्संबन्ध निवृत्तौ निवर्त्तन्त इति तत्त्वविदो वदन्तीत्यर्थः. वदन्तीत्येतत्प मतमित्युक्त्का अज्ञाननिवृत्तिपूर्वकमानन्दरूपं ज्ञानं प्रसादितं प्र म्नानां भगवत्प्रसादविशेषेणाचिन्निवृत्तेः प्रागविद्यादेर्निवृत्तिदर्शना स नियमो नास्ती तदस्याऽभिप्राय इति केचिदाहुः, तन्न मुख्यम्, ते षां शरीरेण सहावस्थानदशायां परमभक्तिपर्यन्तोत्पत्तावपि पाप टलनिवृत्त्या त्वां सततमेव प्राप्नुयाञ्चेद्यावल्लोकपर्यन्तं स्यामित्यु क्तवा " त्सर्वं ह पश्यः पश्यती " त्युक्तस्य मुक्तावस्थायां शयस्याचिन्निवृत्तेः प्रागभावात्. एवं प्रागात्मस्वरूपं बद्धमुक्त तद्रूपेण त्रिविधं, तत्र बद्धचेतनानामविद्याद्युत्पत्तिमूलं, तन्निवृत्ति क्रमश्चोक्तः।

## एते त्रयोपि प्रत्येकमनन्ताः।

एवमुक्तानां त्रिविधात्मवर्गाणां संख्यास्ति न वेतद्याशङ्काय माह एते त्रयोपीतद्यादि. एते त्रयोप्यनन्ता इत्युक्तौ वर्गत्रयस्य स मुदितस्यानन्तत्वं ज्ञायेतेतद्यभिप्रेतद्य प्रतद्येकमित्युक्तम्. अनन्ता तद्यसंख्येया इत्यर्थः।

## केचिदात्मभेदो नास्ति, आत्मैक एवे वदन्ति।

उक्तजीवानन्तद्यविरोध्येकात्मवादं निराकरोति केचिदित्या दिना. केचिदितद्यऽनादरोक्तिः. एवं वदन्तः क इति चे जीवाद्वैतप्रतिपादकशास्त्रे कुदृष्टयः. ब्रह्माद्वैतं जीवाद्वै मिति शास्त्रे प्रतिपाद्यमानमद्वैतं द्विविधम्. तत्र ब्रह्माद्वैतं ना प्रकार्य्यद्वैतम्, जीवाद्वैतं प्रकाराद्वैतम्, एतन्नियामकं किमिति [ चेत् ] ब्रह्मप्रकरणेषु " सर्वं खल्विदं ब्रह्म " " ऐतदा त्म्यमिदं सर्वं " " पुरुष एवेदं सर्वमिति सामानाधिकरण्ये न ब्रह्माद्वैतप्रतिपादनात्, सामानाधिकरण्यस्य प्रकारभेदविशि

...त्वपरत्वात्. एकः सन् बहुधा विचचारेति प्रकारब-
... कण्ठोक्तेः, आत्मनां साम्योक्तेः, ऐक्यविधिशेषस्य
...नास्ति किंचनेत्यादिभेदनिषेधस्य विहितैक्यविरोधिभेदवि-
...त्वात्. सामान्यनिषेधस्य विहितव्यतिरिक्तविषयकत्वेन प्र-
...रबहुत्वनिषेधपरत्वात्, " न तत्समश्चाभ्यधिकश्च दृश्यते " इति
...यप्रकारान्तरनिषेधस्य कण्ठोक्तेः प्रकार्य्यद्वैतमेव ब्रह्माद्वैतम्. जी-
...हुत्वस्य श्रुतिसिद्धत्वा, दन्यथा बद्धमुक्तव्यवस्थानुपपत्तेः, उपदे-
...नुपपत्तेः, सुखादिव्यवस्थानुपपत्तेः,

पुमान्न देवो न नरो न पशुर्नच पादपः ।
चतुर्विधो विभेदोऽयं मिथ्याज्ञाननिबन्धनः ॥
देवादिभेदे विध्वस्ते " इत्यादि भिर्भेदविशेषनिषेधस्य-
...ठोक्तेः.

मुक्तात्मनां साम्योक्तेर्जीवाद्वैतं प्रकाराद्वैतम्. अयमर्थः श्रुतप्रका-
...कायामादिभरतचतुःश्लोकीव्याख्यानोपक्रमे ब्रह्माद्वैतं जीवाद्वैतं
...त्यद्वैतं त्रिविधं शास्त्रप्रतिपाद्यमित्यरभ्य श्रीवेदव्यासभट्टैर्विस्तरे-
प्रतिपादितः. एवं शास्त्रेऽभिहितस्य जीवाद्वैतस्य हृदयमजा-
... आत्मभेदो नास्ति एक एवात्मेति केचित्कुदृष्टयो वदन्ती-
...ः।

## तत्पक्षे कस्यचित्सुखित्वकाले ऽन्यस्य कस्य ...चिद्दुःखित्वं न स्यात्. तच्च देहभेदेनेति चेत्, सौभ ...रिशरीरे ऽपि दृश्येत.

तस्यायुक्ततां साधयति तत्पक्ष इत्यादिना. तत्पक्षे तथात्म-
भेदाभावपक्षे. अहं सुखीति कस्यचित्सुखोत्तरत्वकाले ऽन्यस्य कस्य-
चिदहं दुःखीति दुःखातुरत्वमिति सुखदुःखव्यवस्था न स्यादित्य-
र्थः. सुखदुःखयोरुभयोरेकाश्रयत्व उभयप्रतिसंधानमेकस्यैव स्यात्.
अतः सुखदुःखयोर्नियतत्वादात्मभेद आवश्यक इति भावः. ता-
दृशसुखदुःखव्यवस्थाहेतुर्देहभेद इति तेषां युक्तिमनुवदति तच्चेत्या-
दिना. तदनुपपत्तिमाह सौभरीत्यादिना. देहभेदस्य सुखदुःखनि-

यमहेतुत्वे ऽनेकदेहपरिग्रहवतः सौभरेरपि स नियमो दृश्ये[illegible] देहभेदस्य सुखदुःखनियामकत्वाभावे जन्मान्तरानुभव ए[illegible] कुतो न स्मर्य्यत इति चेत्, [स] स्मरणाभावः संस्कारानुद्भव[illegible] न्नाशाद्वा. शरीरान्तरे सुखदुःखस्मृत्याद्यभावो ऽप्यन्यतरेणेति[illegible] कस्मिन्नपि शरीरे स्मृतिर्न्न स्यात्. तस्मात्सुखदुःखनियमहे[illegible] भेद इति न शक्यते वक्तुम्.

**कश्चित्संसरति कश्चिन्मुच्यते कश्चिच्छि[illegible] कश्चिदाचार्य इति च न स्यात्, विषमसृष्टिश्च न[illegible] पद्यते. आत्मभेदमभिदधत्या श्रुत्या च विरोधः।**

एवं सुखदुःखव्यवस्थाऽनुपपत्तिरेव न भवत्येकात्मपक्षे, [illegible] तु बद्धमुक्तव्यवस्थायाः शिष्याचार्य्यव्यवस्थायाश्चा ऽनुपपत्तिश्चे[illegible] कश्चिदित्यादिना. आत्मा एकश्चेत्

" अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् ।
मोहश्रमं प्रयातो ऽसौ वासनारेणुगुण्ठितः[1] " ॥

इत्युक्तप्रकारेण कश्चित्संसरति शुको मुक्तो वामदेवो [illegible] इत्युक्तप्रकारेण कश्चिन्मुक्तो भवति ।

" तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्
समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ।
तस्मै स विद्वानुपसन्नाय सम्यक्
प्रशान्तचित्ताय शमान्विताय ॥
येनाक्षरं पुरुषं वेद सत्यं
प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ।

इत्युक्तप्रकारेण कश्चिच्छिष्यो भूत्वोपसत्तिं करोति, कश्चि[illegible] चार्य्यः सन्नुपदेशं करोतीति व्यवस्था न स्यादित्यर्थः ।

अन्यां चानुपपत्तिमाह विषमेत्यादिना. आत्मैकश्चेत् दे[illegible]

---

( १ ) कुण्ठित इति पुस्तकस्थः पाठः ।

...षां रूपेण केषाञ्चित्सुखोत्तराणां केषाञ्चिद्दुःखोत्तरा-
...ञ्चिन्मिश्रसुखदुःखानामेवं लोके पदार्थानां वैषम्येण
...स्य सृष्टिर्नोपपद्यत इत्यर्थः. जीवभेदः कर्म्मतारत-
एते खलु विषमसृष्टेर्हेतुः. एवं युक्तितो ऽनेकविरोधा दर्शि-
...भि. अथास्मिन् पक्षे श्रुतिविरोधो ऽप्यस्तीत्याह आत्मभेदमित्या-
...स्या. एकात्मपक्षो " नित्यो नित्यानां चेतनश्चेतनानामेको ब-
...नां यो विदधाति कामान् " इत्यात्मभेदाभिधायिश्रुतिविरुद्ध
...त्यर्थः.

नन्वियं श्रुतिरात्मभेदाभिधायिनी चेत्, " भोक्ता भो-
" " पृथगात्मानम् " " ज्ञाज्ञौ द्वावजावीशानीशौ "
...न्योन्तर आत्मा विज्ञानमय " इति जीवैकत्वप्रतिपादकश्रु-
...र्विरोधः, तस्मादौपाधिकभेदाभिधायिनीयं श्रुतिरिति तन्मतं
...करोति

**श्रुतिरौपाधिकं भेदमभिधत्त इति न शक्यते**
**...तुम्. मोक्षदशायाम्भेदसत्त्वात्. तदानीं देवमनु-**
**...दिभेदानाञ्च निवृत्तावात्मनां स्वरूपस्यात्यन्तस-**
**...या केनापि प्रकारेण भेदकथनायोग्यत्वे ऽपि प-**
**...णगुरुत्वाकाराणां साम्येपि स्वर्णकलशरत्नव्री-**
**प्रभृतीनां यथा भेदः सिध्यति, तथा ऽऽत्मस्वरू-**
**भेदः सिद्धः. तस्मादात्मभेदः स्वीकार्य्यः ।**

...तिरित्यादिना. औपाधिकभेदो नाम देवमनुष्यादिभेदः कामक्रोधा-
...भेदश्च. औपाधिकभेदो न भवतीत्यत्र हेतुमाह मोक्षदशायामित्या-
...ना, " सदा पश्यन्ति " " मम साधर्म्यमागताः " " मुक्ताना-
म्परमा गतिः " " सायुज्यं प्रतिपन्ना ये " यस्मिन्पदे विराजन्ते
मुक्ताः संसारबन्धनै " रिति मोक्षदशायामात्मभेदस्य श्रुत्याभुक्तस्य-
सत्त्वादित्यर्थः. मोक्षदशा हि सर्वोपाधिविनिर्मुक्तदशा, तत्राप्या-

त्मभेदस्य श्रुतिसिद्धत्वात्, नित्यो नित्यानामिति श्रुति...
वदतीति भावः.

नन्वात्मभेदप्रतिपत्तिहेतूनामौपाधिकानां देवमनुष्यादि...
नां कामक्रोधादिभेदानां निवृत्तौ आत्मनां स्वरूपमत्यन्त...
मतया केनापि प्रकारेण भेदकथनायोग्यं मोक्षदशायां ति...
ति, तत्रात्मभेदः कथं सिद्ध्यतीति वादिप्रश्नमनुवदति त...
नीमित्यादिना भेदकथनायोग्यत्वेपीत्यन्तेन. दृष्टान्तमुखेन भेदं स...
धयति परिमाणेत्यादिना. परिमाणगुरुत्वादिभिः समानानां स्व...
कलशरत्नव्रीहिप्रभृतीनां पदार्थानां भेदकस्य लक्षणस्याभावे...
यथा नानात्वं दृश्यते, तथा केनापि प्रकारेण भेदज्ञापनायोग्यान...
काकाराणां मुक्तात्मनां स्वरूपभेदः सिद्ध्यतीत्यर्थः. पूर्वोक्तसर्व...
नुभाषमाणस्तस्मादात्मभेदो ऽवश्यं स्वीकर्तव्य इति निगमः...
तस्मादित्यादिना। एवं केचिदात्मभेदो नास्तीत्यारभ्यैतावता प्र...
स्वोक्तजीवानन्त्यप्रतिभटमेकात्मवादमुत्क्षिप्य युक्तितः शास्त्रत...
बहुमुखं दूषयित्वा ऽऽत्मभेदस्साधितः।

प्रागात्मस्वरूपवैलक्षण्यं विस्तरेणोक्तम्, तत्र ह्य[1]ऽचिद्विलक्ष...
त्वमजडत्वमानन्दरूपत्वमव्यक्तत्वमचिन्त्यत्वं निरवयवत्वं निर्विक...
रत्वं ज्ञानाश्रयत्वमेतानि जीवेश्वरसाधारणानि, नियाम्यत्वादि...
चिदचित्साधारणम्, अणुत्वमचित्परमाणुजीवसाधारणम्. ए...
सर्वेषां मिलितानामचिदीश्वरव्यावर्तकत्वाल्लक्षणत्वं सम्भवति,
थापि सुग्रहं लघु लक्षणमाह एतेषां लक्षणमित्यादिना.

## एतेषां लक्षणं शेषत्वसहितं ज्ञातृत्वम्.

एतेषामिति, त्रिविधचेतना[2]मित्यर्थः. असाधारणधर्मो हि लक्षण...
म्. शेषत्वमात्रेणाचिद्व्यावृत्त्यसिद्धेर्ज्ञातृत्वमात्रोक्तावीश्वरव्यावृत्त्य...
सिद्धेश्च शेषत्वे सति ज्ञातृत्वं लक्षणमुक्तम्. एवं ज्ञातुरात्मनो ज्ञान...
स्य स्वरूपस्य च साधर्म्यवैधर्म्ये आह

---

(१) उक्तं हि तत्राचिदिति पुस्तके पाठः।
(२) त्रिविधचेतनाचेतनानामिति पुस्तकस्थपाठस्तु न युक्तः।

...षां ज्ञानं स्वरूपमिव नित्यं द्रव्यमजड़-
...रूपश्च.

एतेषां ज्ञानमित्यादिना. स्वरूपमिव नित्यं द्रव्यमजड़मान-
...मित्यनेन नित्यत्वद्रव्यत्वाजडत्वानन्दरूपत्वानि स्वरूपस्येव
...स्यापि सन्तीत्युक्तम्. नित्यत्वादिकमुपपाद्य वैधर्म्यकथने
...ग्रन्थव्यवधानं स्यादिति विचार्य्य साधर्म्यकथनानन्तरं वैधर्म्यं
...तु तज्जिज्ञासुप्रश्नमुत्क्षिपति

तर्हि ज्ञानस्वरूपयोः परस्परं वैलक्षण्यं कि-
...ति चेत्, स्वरूपं धर्म्मि संकोचविकासानर्हं स्व-
...तिरिक्ताऽप्रकाशकं स्वस्मै स्वयंप्रकाशकमणु,
...नं धर्म्मः सङ्कोचविकासयोग्यं स्वव्यतिरिक्त-
...काशकं स्वस्मै स्वाऽप्रकाशमात्मने प्रकाशकं वि-
...च.

...र्हीत्यादिना. वैधर्म्यमाह स्वरूपमित्यादिना. धर्म्मित्वं संकोचवि-
...ायोग्यत्वं स्वव्यतिरिक्तार्थाप्रकाशत्वं स्वस्मै स्वयंप्रकाशकत्वम-
...त्वमेतानि स्वरूपस्य विशेषाः. धर्मत्वं संकोचविकासयोग्यत्वं स्वव्य-
...रिक्तार्थप्रकाशकत्वं स्वस्मै स्वयंप्रकाशरहितत्वं स्वाश्रयस्य स्वयंप्र-
...शत्वं विभुत्वमेतानि ज्ञानस्य विशेषाः. विभ्विति, ज्ञानस्य स्वा-
...विको वेष उक्तः.

ननु सकलचेतनानां ज्ञानमेवं कुतो न भवतीत्याशङ्कायां संको-
...ासंकोचनिबन्धनं तारतम्यमाह

तत्र केषांचित् ज्ञानं सदा विभु, केषाञ्चिज्ज्ञानं
सदा ऽविभु, केषाञ्चिज्ज्ञानं कदाचिद्विभु.

तत्र केषांचिदित्यादिना. अज्ञानशून्या अमरा इत्युक्-

प्रकारेण कदाचिदपि भगवज्ज्ञानस्य संकोचाभाव रूपरूपगुणविभूतीः सदानुभवतां नित्यसूरीणां ज्ञानं स भवति. मिथ्याज्ञानदुष्कर्म्ममलिनदेहयुक्तानां बद्धानां ज्ञानं नुगुणसङ्कोचविकासवत्सदा ऽविभु भवति. " तीरं दृष्ट्व इत्युक्तप्रकारेण भगवत्प्रसादेन संसारसागरं तीर्त्वा तत्तीरं प्र मुक्तानां ज्ञानं पूर्वावस्थायामविभूत्तरावस्थायां " सर्वं ह पश्यती " त्युक्तप्रकारेण विभु भवतीत्यर्थः।

अथ ज्ञानस्योक्तं नित्यत्वादिकमुपपादयति. तत्र थमं ममेदानीं ज्ञानमुत्पन्नं नष्टमित्युत्पत्तिविनाशवत्तया ऽनुभूय स्य ज्ञानस्य नित्यत्वं कथमुपपद्यत इति शङ्कां परिहर्तुं तज्जिज्ञा श्नमनुवदाति

**ज्ञानं नित्यं चेन्मम ज्ञानमुत्पन्नं नष्टमि व्यवहारः कथमिति चेत्, इन्द्रियद्वारा प्रसृ विषयान् गृह्णाति निवर्त्तत इत्यतस्तथा व्यवह्रि ते. इदमेकमपि नानात्वेन भासते प्रसरणभेदेन**

ज्ञानं नित्यं चेदित्यादिना. तस्योत्तरमाह इन्द्रिये दिना. " सर्वं ह पश्यः पश्यति " " स चानन्त्याय क ते " इति मुक्तिदशायां सर्वविषयकत्वोक्तेस्सर्वसाक्षात्कार ग्यमपि " यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्व्वगे " क्तप्रकारेण कर्मणा सङ्कुचितम्,

तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता।
सर्वभूतेषु भूपाल तारतम्येन वर्तते॥
अप्राणिमत्सु स्वल्पा सा स्थावरेषु ततोधिका "

इत्युक्तप्रकारेण कर्म्मानुगुणतारतम्यवत्,

इन्द्रियाणां हि सर्व्वेषां यद्येकं क्षरतीन्द्रियम्।
तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्॥

इत्युक्तप्रकारेणेन्द्रियद्वारा निःसृतच विषयान् गृह्णाति, तो निवर्तते. तादृशविकाससंकोचप्रयुक्तप्रकाशाऽप्रकाशावायो

…ते व्यवह्रियत इत्यर्थः. एवमिन्द्रियद्वारा प्रसरतो ज्ञानस्यैक-
विषयग्रहणवेलायां प्रकाशावसरे दर्शनश्रवणादिसंज्ञाभेदवद-
त्वेन कथं प्रकाशत इतिशङ्कायामाहइदं चेत्यादिना. एकमुखेन
रणं विना चक्षुःश्रोत्राद्यनेकेन्द्रियद्वारा प्रसृत्य रूपशब्दाद्यनेक-
यान् गृह्णतोऽस्य दर्शनश्रवणादिसंज्ञाभेदेन ज्ञायमानं नानात्वं
रणभेदनिबन्धनमित्यर्थः. अनेन नित्यस्य ज्ञानस्योत्पत्तिविना-
यवहारहेतुकथनानन्तरं प्रासङ्गिकस्तस्य नानात्वेन प्रकाशस्य
श्लोकः. आत्मनो ज्ञानस्य नित्यत्वम्. " नहि विज्ञातुर्विज्ञातेर्वि-
लोपो विद्यते, नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते "

ज्ञानं वैराग्यमैश्वर्यं धर्मश्च मनुजेश्वर ।
आत्मनो ब्रह्मभूतस्य नित्यमेतच्चतुष्टयम् ॥
यथोदपानकरणात् क्रियते न जलाम्बरम् ।
सदेव नीयते व्यक्तिम[1]सतस्सम्भवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः ।
प्रकाशन्ते[2] न जन्यन्ते नित्या एवात्मनो हि ते " ॥

इत्यादिश्रुतिस्मृतिभिरुक्तम्. एतावता[3] ज्ञाननित्यत्वमुक्त-
म् ।

**द्रव्यत्वं कथमिति चेत् क्रियागुणानामाश्रय-
त्वादजडत्वाच्च द्रव्यम्भवति. अजडत्वं चेत्सुषुप्ति-
मूर्च्छादिषु कुतो न प्रकाशत इति चेत्, प्रसरणा-
भावान्न प्रकाशते.**

अथ तस्य द्रव्यत्वमुपपादयितुं तज्जिज्ञासुप्रश्नमनुवदति द्रव्य-
त्वमित्यादिना. तद्धेतूनुक्त्वा द्रव्यत्वं साधयति क्रियेत्यादिना. क्रिया
सङ्कोचविकासौ, गुणः संयोगवियोगौ, अजडत्वं स्वयंप्रकाशत्वम्. क्रि-
याश्रयो द्रव्यमिति द्रव्यलक्षणकथनात् क्रियाश्रयत्वं गुणाश्रयत्वं च

(१) व्यक्तिरसत इति पुस्तके पाठः, स तु न युक्तः प्रतिभाति ।
(२) प्रकाश्यन्ते–पु. पा. ।
(३) एतादृशमिति–पु. पा. ।

प्रत्येकं द्रव्यत्वसाधकम्. एताभ्यामजडत्वस्यापि कथं द्रव्यत्वसाधकमित्यस्याशयः. तथाहि, जडवस्तुषु द्रव्यमद्रव्यं वर्तते. अजडवस्तुष्वद्रव्यं किञ्चिदपि नास्ति. तस्माज्ज्ञानं द्रव्यं जडत्वात्, यद्ऽजडं तद्द्रव्यम्, यथात्मेतच्ऽजडत्वेन द्रव्यत्वसाधनं युक्तमेव. अत एवेदमजडत्वात् सङ्कोचविकासयोः संयोगवियोगादीनाञ्चाश्रयत्वाच्च द्रव्यमिति तत्त्वशेखरे स्वयमवोचत्. न्वेवं द्रव्यत्वं चे, दात्मगुणत्वमस्य कथमिति चेन्न,नित्यतदाश्रितत्वाद्गुणत्वम्.

"आश्रयादन्यतो वृत्तेराश्रयेण समन्वयात् ।
द्रव्यत्वञ्च गुणत्वञ्च ज्ञानस्यैवोपपद्यते" ॥

इति यामुनाचार्य्यैरुक्तम्. आश्रयादन्यतोवृत्तित्वमत्र क्रियाश्रयत्वोक्त्या लब्धम्. इदञ्च ज्ञानमात्रस्य न भवति, किन्तु दीपादितेजःपदार्थप्रभाणामपि तुल्यम्. तस्माद्द्रव्यत्वं गुणत्वमुभयमपि ज्ञानस्योपपन्नम्. पूर्वं ज्ञानस्य स्वोक्ताजड़त्वविषयकं जिज्ञासुप्रश्नमनुवदति अजडत्वं चेत्यादिना. ज्ञानं यदि स्वयम्प्रकाशं तदा सदा प्रकाशेत, सुषुप्त्याद्यवस्थासु कुतो न प्रकाशत इत्यर्थः. तस्योत्तरमाह प्रसरणाभावादिति. ज्ञानं स्वाश्रयस्य विषयग्रहणवेलायामेव हि स्वयमेव प्रकाशते, सुषुप्त्याद्यवस्थासु तमोगुणाद्युद्भवेन संकुचितं तिरोहितमणिद्युमणिप्रकाशादिवत्प्रसरणाभावान्न प्रकाशत इत्यर्थः।

**आनन्दरूपत्वं नाम ज्ञानस्य प्रकाशावस्थायामनुकूलत्वम्म्. विषशस्त्रादिप्रकाशनावसरे प्रतिकूलत्वस्य हेतुर्देहात्मभ्रमादयः. ईश्वरात्मकत्वात्सर्वेषाम्पदार्थानामानुकूल्यमेव स्वभावः, प्रातिकूल्यमौपाधिकम्. अन्यदानुकूल्यं स्वाभाविकं चेत् कस्य चित्कुत्रचित्कालदेशयोरनुकूलानि चन्दनकु**

(१) यथात्मादिष्वजडत्वेनेति पुस्तके पाठस्तु न युक्तः।

...दीनि, देशान्तरे कालान्तरे तस्यैव तद्देश एव काल एवाऽन्यस्य प्रतिकूलानि न स्युः ॥

॥ एवं चित्तत्त्वविषयकथनं समाप्तम् ॥

अथास्यानन्दरूपत्वमुपपादयति आनन्दरूपत्वमित्यादिना. ...शावस्थायां स्वाश्रयस्य विषयप्रकाशनावस्थायाम् तदैव हीदं प्र-... तदवस्थायामनुकूलत्वं नाम तत्तद्विषयाणामनुकूलत्वेन भाना-...न् विषयीकुर्व्वतो ऽस्य ज्ञानस्य स्वाश्रयस्य सुखरूपत्वम्. ननु विषशस्त्रादिदर्शनावस्थायां तद्विषयकं ज्ञानं कथम्प्रतिकूलं भ-...याशङ्कयाह विषशस्त्रादीत्यादि. तत्प्रकाशनावसरे तद्विषयक-...य दुःखरूपत्वे कारणं तत्र बाधकबुद्धिमूलं देहात्मभ्रमः. क-...रात्मकत्वज्ञानाभावश्चेत्यर्थः. एतेषां स्वाभाविको वेषः को ...ङ्क्षायामाह ईश्वरात्मकत्वादित्यादि. “ जगत्सर्वं शरीर-...” “ तानि सर्व्वाणि तद्वपुः ” “ तत्सर्वं वै हरेस्त-...” रिति सकलपदार्थानामपि भगवच्छरीरत्वोक्तेर्भगवदात्मक-...यमानत्वदशायां सर्वेषामनुकूलतया भानात्सर्वेषां पदार्थो-...कूल्यमेव स्वभावः, तत्र भासमानं प्रातिकूल्यं देहात्मभ्रमा-...कत्वादागन्तुकमित्यर्थः ।

एवमीश्वरात्मकत्वात्सकलपदार्थानामानुकूल्यमेव स्वभाव किमुच्यते चन्दनकुसुमादीनामानुकूल्यं स्वाभाविकं खल्विति ...यामाह अन्यदानुकूल्यमित्यादि. अन्यदानुकूल्यमिति स्वोक्ता-...वदात्मकत्वप्रयुक्तादानुकूल्यादन्यत् चन्दनकुसुमादिपदार्थेषु भा-...नमानुकूल्यमुच्यते तत्तेषां स्वाभाविकं चे, द्वोक्तुः कस्यचित्क-...श्चित्काले कस्मिंश्चिद्देशे ऽनुकूलानि कालान्तरे देशान्तरे वा ...एव प्रतिकूलानि, यद्देशकालयोस्तस्यानुकूलानि तद्देशकालयोरे-...न्यस्य प्रतिकूलानि च न स्युः. एवम्प्रतिकूलतया ज्ञायमानानि ...याम, स्तस्माद्भगवदात्मकत्वनिबन्धनमानुकूल्यमेव स्वाभाविकम्, ...यदानुकूल्यं न स्वाभाविकमिति भावः ।

वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ।
कोपाय च ततस्तस्माद्वस्तु वस्त्वात्मकं कुतः ॥
तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।

तदेव कोपाय ततः प्रसादाय च जायते॥
तस्माद्‌दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्॥

इतत्ययमर्थः श्रीपराशरेण भगवता सुविशदमुक्तः, ते
विषशस्त्रादीनाम्प्रतिकूलतया चन्दनकुसुमादीनामनुकूलतया त
भानं देहात्मभ्रमादिभिरीश्वरात्मकत्वात्सकलपदार्थानामानुकूल
व स्वभावः. तस्मात्तदाकारेण भानदशायां सर्वविषयप्रकाश
शायामपि ज्ञानमानन्दरूपमेवेत्युक्तम्।

एवमेतावता चिदित्यात्मेति प्रथमं चिच्छब्दवाच्य
मवस्तूद्दिश्य, अनन्तरं देहादिविलक्षणमित्यारभ्य शेषमि
न्तं तत्स्वरूपलक्षणं विस्तरेणोक्त्वा, देहादिविलक्षणत्वं
थमित्यारभ्य शेषत्वं नामेत्यन्तेनोक्तलक्षणं परीक्ष्या, नन्तरं
भूतस्यात्मस्वरूपस्य बद्धमुक्तनित्यरूपेण त्रैविध्यमुक्त्वा, बद्ध
नामविद्यादिसबन्धस्य हेतुं तन्निवृत्तिक्रमं त्रिधात्मवर्गस्य प्र
मानन्त्यं चोक्त्वा, तादृशजीवानन्त्यप्रतिभटमेकात्मवादं युक्ति
स्त्राभ्यां निरस्य आत्मभेदं साधयित्वा, प्राग्विस्तरेणोक्तप्रका
सुग्रहं त्रिविधात्मनां लक्षणं प्रदर्श्या, नन्तरं ज्ञानस्य स्वरू
साधर्म्यवैधर्म्ये उत्क्वा, ज्ञानविभुत्वप्रसङ्गेण त्रिविधचेतनान
नस्य विशेषमुक्त्वा पूर्वं ज्ञानस्योक्तानि नित्यत्वाजडत्वान
त्वानि क्रमेणोपपादितवान्॥

॥ एवं चित्तत्त्वविषकथनं समाप्तम्॥

तत्त्वत्रयं चिदचिदीश्वरश्चेत्युद्देशक्रमेण प्रथमं चिच्छब्दवाच्यस्यात्मनः स्वरूपस्वभावविशेषान् स्फुटमवोचत्. अनन्तरमचिद्वस्तुनः स्वरूपस्वभावविशेषानतिस्फुटमाह, तत्र प्रथममचिल्लक्षणमाह

## ॥ अथाचित्प्रकरणम् ॥

**अचिज्ज्ञानशून्यं विकारास्पदम्म्. इदं शुद्धसत्त्वं मिश्रसत्त्वं सत्त्वशून्यं चेति त्रिविधम्.**

अचिदित्यादिना. अचित् चैतन्यानाधारो वस्तु. तदेवाह ज्ञानशून्यमिति. अत एव श्रुतिर्भोग्यशब्देनाचिद्वस्त्वभिधत्ते. विकारास्पदत्वं नाम विकारस्याश्रयत्वम्. विकारो ऽवस्थान्तरापत्तिः. सा च चिद्वत्सदैकरूपत्वाभावः.

एवमेतल्लक्षणकथनानन्तरमस्याचिद्वस्तुनः सत्त्वैकाधारतया सत्त्वादिगुणत्रयाधारतया सत्त्वादिगुणत्रयशून्यतया च त्रैविध्यमाह इदमित्यादिना. उद्देशक्रमेणाचित्तत्त्वस्य च स्वरूपस्वभावविशेषान् प्रतिपादयिष्यन् प्रथमं शुद्धसत्वस्य प्रकारानाह

**तत्र शुद्धसत्त्वं नाम रजस्तमोऽमिश्रकेवलसत्त्वं नित्यं ज्ञानानन्दजनकं कर्म्मणा विना केवलभगवदिच्छया विमानगोपुरमण्डपप्रासादादिरूपेण परिणतं निरवधिकतेजोरूपं नित्यमुक्तैरीश्वरेण च परिच्छेत्तुमशक्यमत्यद्भुतं वस्तु।**

तत्र शुद्धसत्त्वमित्यादिना. शुद्धसत्वं गुणान्तरामिश्रितसत्वगुणवदित्यर्थः. तदाह रजस्तम इत्यादिना. “क्षयं तमस्य रजसः पराके,” “तमस्तु पारे,तमसः परस्तात्,” “पञ्चशक्तिमये दिव्ये शुद्धसत्त्वे सुखाकरे” इत्यादिश्रुतिस्मृतिभिरुक्तम. नित्यमनादिनिधनम् “ तदक्षरे परमे व्योमन् ”

" कालातीतमनाद्यन्तमप्राकृतमचञ्चलम् ।
प्राप्यमर्चिर्मयात्सद्भिर्मयि संन्यस्तमानसैः ॥
यत्तत्पुराणमाकाशं सर्वस्मात्परमं ध्रुवम् ।
यत्पदं प्राप्य तत्त्वज्ञा मुच्यन्ते सर्वकिल्बिषैः ॥

इत्येतस्य नित्यत्वमपि श्रुतिसिद्धम्. ज्ञानानन्दजनकमि शुद्धसत्त्वमयत्वाज् ज्ञानानन्दजनकमित्यर्थः. सत्त्वं ज्ञानसुखा खलु. अत एव शुद्धसत्त्व इत्यनन्तरं सुखाकर इत्युक्तम्. क विना केवलभगवदिच्छया विमानगोपुरमण्डप[1]प्रासादादिरूपेण णतमिति, चेतनाः कर्म्मानुगुणमिच्छन्ति. तदिच्छानुगुणभगवत्सं ल्पेन चतुर्विंशतितत्त्वरूपेण परिणम्य चेतनानां भोग्यभोगोपक णभोगस्थानरूपेण स्थितं प्रकृतितत्त्वमिव न भवतीदं, किंतु स्व गार्थतया भगवदिच्छया विमानगोपुरादिरूपेण परिणमत " देवानां पूरऽयोध्या तस्यां हिरण्मयः कोशः यो वै तां ब्रह्म दामृतेनामृतां पुरीम् " " अपराजिता पूर्ब्रह्मणः प्रजापतेः स प्रपद्ये " इति श्रुतौ संग्रहेण नित्यविभूतौ विद्यमाना दिव्यनगर व्यायतनादय उक्ताः. अमुमर्थं श्रीभाष्यकारः श्रीवैकुण्ठगद्ये ' व्यावरणशतसहस्रावृते[2] दिव्यकल्पतरूपशोभिते दिव्योद्यानशत हस्रकोटिभिरावृते ऽतिप्रमाणे दिव्यायतने कस्मिंश्चिद्विचित्रदिव्य रत्नमयदिव्याऽऽस्थानमण्डप " इत्यादिना विस्तरेणान्वोचत्. नि वधिकतेजोरूपमिति. अग्न्यादित्यादितेजःपदार्थानपि खद्योतक ल्पान् कुर्वदनवधिकतेजः स्वरूपमित्यर्थः.

" न तत्र सूर्यो भाति न च चन्द्रतारकं
नेमा विद्युतो भान्ति कुतो ऽयमग्निः " ।
" अतर्क्यानलदीप्तं तत्स्थानं विष्णोर्म्महात्मनः ।
स्वयैव प्रभया राजन् दुष्प्रेक्ष्यं देवदानवैः ॥

इत्यादि. एवं दिव्यसूरिभिरप्येतस्य निरवधिकतेजोरूप बहुषु स्थलेषूक्तम्.

नित्यमुक्तैरीश्वरेण च परिच्छेत्तुमशक्यमिति, अस्य परि

---

(१) अत्र ' मण्डप ' पदं पुस्तके नास्ति ।
(२) अत्र सर्वत्र स्थानेषु आवृतस्थाने ' आवृत्त ' पदं पुस्तके भवति ।

माणादयः केनापि परिच्छेत्तुं न शक्यन्त इत्यर्थः. तेषामपी-यत्परिमाणमियदैश्वर्यमीदृशस्वभावमिति परिच्छेत्तुमयोग्य मिति. नित्यैः परिच्छेत्तुमयोग्यमिति श्रीवैकुण्ठगद्ये भाष्यकारैर्यदु-क्तम्, तन्मुक्तानामपि तुल्यम्. ईश्वरज्ञानस्यैवैतेषां ज्ञानस्यापि स-र्वदर्शित्वसत्त्वात्, तेन परिच्छेत्तुं शक्यते चेदेतैरपि परिच्छेत्तुं शक्ये-तैव. तस्मात्तेनाप्यशक्यमेवेत्यर्थः. तर्ह्येतेषां सर्वज्ञताया विरो-ध इति नाशङ्कनीयम्, सर्वज्ञता हि सर्वेषां यथावस्थिताकारविषय-ज्ञानम्. परिच्छेद्यं चेत्, तथा ज्ञानम्. अपरिच्छेद्यं चेत्, तथा ज्ञानम्. निस्सीमस्य कस्यचिदपरिच्छेदेन ज्ञानं सर्वज्ञत्वानुगुणमिति.

> देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायते
> यद्यप्येव, तथापि नैव युवयोः सर्वज्ञता हीयते ।
> यन्नास्त्येव तदज्ञतामनुगुणां सर्वज्ञताया विदु-
> र्व्योमाम्भोजमिदंतया किल विदन् भ्रान्तोऽयमित्युच्यते ॥

इति श्रीस्तुतौ कूरेशैरुक्तम्, अन्यथा स्वेनापि ज्ञातमशक्यस्वभाव इत्येतदपि सर्वज्ञतया विरुद्ध्येत. तस्मान्नित्यमुक्तेश्वरैरपरिच्छेद्यमि-त्यत्र न कोऽपि विरोधः. अनेनास्य विभव[1] उक्तः.

अत्यद्भुतमिति. अत्यद्भुतत्वं नामानुक्षणमपूर्वाश्चर्यावहत्वम्. अनन्ताश्चर्यानन्तमहाविभवेति भाष्यकृतः. एवं शुद्धसत्वमेतादृ-शमित्युक्तम् ।

## केचनैतज्जडं वदन्ति, केचिदजडं वदन्ति. अजडत्वे नित्यानां मुक्तानामीश्वरस्य च ज्ञा-नेन विना स्वयमेव प्रकाशते. संसारिणां न भासते.

एतच्छुद्धसत्वमेतद्दर्शनस्थेषु केचिज्जडमिति वदन्ति, केचि-दजडमिति वदन्तीत्यर्थः. " इह जडामादिमां केचिदाहु " रि-त्यभियुक्ताः. जडत्वं स्वयंप्रकाशराहित्यम्. तदेवाह अजडत्व इ-

---

(१) विभव इत्यस्य स्थाने वैभव इति पुंलिङ्गपाठः पुस्तके सर्वत्र भवति ।

त्यादिना . अजडत्व इति, अजडमिति पक्ष इत्यर्थः . जडमिति षाञ्चित्पक्षं विहाय तत्पक्षोपपादनादऽस्यायमेव पक्षो ऽभिमत इ ज्ञायते . ज्ञानेन विना प्रकाशत इति, ज्ञानेनैव न भासते ऽपि तु स्व यमेव भासत इत्यर्थः . नन्वेवं स्वयं भासत इति चे, त्संसारिण मपि ज्ञानमनपेक्ष्य स्वयमेव कुतो न भासत इत्याशङ्कायामाह संसा रिणामिति . इदं चाभियुक्तैर्विस्तरेण प्रतिपादितम् . तथाहि, " त्रि विधाऽचेतनानीत्यारभ्य तत्र प्रकृतिः कालश्च जडौ, शुद्धसत्त्वद्रव्य मपि केचिज्जड़ं वदन्ति. जडत्वन्नाम स्वयम्प्रकाशराहित्यम् . भगव च्छास्त्रादिकं परामृशन्तो ज्ञानात्मकतया शास्त्रसिद्धतया शुद्धसत्त्व द्रव्यं स्वयंप्रकाशमिति वदन्ति. एवं स्वयंप्रकाशं चेत्संसारिणां शा स्त्रेणैव विना स्वयमेव भासेतेति चेत्सर्वेषामात्मनां स्वरूपस्य ज्ञा नस्य च स्वयम्प्रकाशत्वे ऽपि स्वरूपं स्वस्यैव स्वयम्प्रकाश, मन्ये षां ज्ञानान्तरवेद्यं यथा भवति, यथा च[1] धर्मभूतज्ञानं स्वाश्रयस्यैव स्वयंप्रकाशन्नेतरेषाम्, तथेदमपि नियतविषये स्वयंप्रकाशते चे, क को ऽपि विरोधः .

यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतः ।
तम्प्रणम्य हरिं शास्त्रन्यायतत्त्वम्प्रचक्ष्महे ॥

इत्युक्तप्रकारेण धर्मभूतज्ञानेन सर्वं सदा साक्षात्कुर्वत ईश्वरस्य शुद्धसत्त्वद्रव्यं स्वयम्प्रकाशत इति कथमुपपद्यत इति चेन्न, अस्य धर्मभूतज्ञाने दिव्यात्मस्वरूपप्रभृतीनि सर्वाणि विषयीकुर्वत्यपि यथा दिव्यात्मस्वरूपं स्वयम्प्रकाशं भवति, तथेदमपि स्वयम्प्रकाशं भ वति, तथा मुक्तानां तदवस्थायामिदमपि स्वयंप्रकाशम्भवतीति न कश्चिद्विरोधः . यथा धर्मभूतज्ञानस्य स्वात्मप्रकाशनशक्तिर्विषय प्रकाशाभावकाले कर्मविशेषैः प्रतिबद्धा भवति, तथा शुद्धसत्व स्य स्वात्मप्रकाशनशक्तिश्च बद्धदशायां प्रतिबद्धा भवति. तस्मा च्छुद्धसत्त्वं बद्धानां न प्रकाशते.

धियः स्वयंप्रकाशत्वं मुक्तौ स्वाभाविकं यथा ।
बद्धे कदाचित्संरुद्धं तथात्रापि नियम्यते ॥

---

(१) तथा चेति पु . पा . ।

एतावदवस्थान्तरापत्तिर्विकारिद्रव्यस्य न विरुध्यते[१]. तस्मा-त्प्रतिपन्नार्थस्य न युक्तिविरोधावकाश " इति रहस्यत्रयसारे प्रतिपा-दितम्.

पूर्वं यथाऽऽत्मनो ज्ञानस्य चाजडत्वेपि मिथोभिन्नत्वं दर्शितम्, तथा शुद्धसत्त्वस्याजडत्वेपि तदुभाभ्यां भेदं दर्शयितुं तज्जिज्ञासु-प्रश्नमनुवदति

**आत्मनो ज्ञानाच्च भेदः कथमिति चेत्, अहमि-त्यभानात्, शरीरादिरूपेण परिणामात्, विषयैर्विना भानात्, शब्दस्पर्शादिमत्त्वाच्च भिद्यते.**

आत्मन इत्यादिना. अनेकैर्हेतुभिस्तं दर्शयति. अहमिती-त्यादिना. अहमित्यभानादिति इदमिति हि प्रकाशते, अनेना-त्मनो भेदसिद्धिः. शरीरादिरूपेण परिणामादिति, आत्मनो ज्ञानाच्च भिन्नमित्यर्थः. एकरूपत्वादात्मनो न परिणामः, ज्ञानस्य परिणामि-त्वेपि शरीरादिरूपेण परिणामो नास्ति, विषयनिरपेक्षं प्रकाशमान-त्वात् शब्दस्पर्शाद्यऽनाश्रयत्वाच्च विषयासन्निधाने प्रकाशमाना-च्छब्दस्पर्शाद्यनाश्रयात्तद्ग्राहकाज् ज्ञानाद्भिन्नमिति सिद्धम्. एवं शुद्धसत्त्वप्रकारमवोचत् ।

अनन्तरम्मिश्रसत्त्वप्रकारं वक्तुं मिश्रसत्त्वं नामेत्युपक्रमते

**मिश्रसत्त्वन्नाम सत्त्वरजस्तमोभिस्त्रिभिर्युक्तो बद्धचेतनानां ज्ञानानन्दयोस्तिरोधायको विपरीतज्ञा-नजनको नित्य ईश्वरस्य[२] क्रीडापरिकरः प्रदेशभेदेन-कालभेदेन च सदृशासदृशविकारोत्पादकः प्रकृत्य-**

---

(१) न विरुद्धमिति पु. पा. ।

(२) विपरीतज्ञानजनको नित्यमीश्वरस्येति पुस्तके पाठः, तथा टीकायामपि " नित्यमिति, उत्पत्तिविनाशरहित इत्यर्थ " इति भवति ।

ऽविद्यामायाऽपरनामा ऽचिद्विशेषः ।

मिश्रसत्वन्नाम रजस्तमोयुक्तसत्त्ववत्, तदेवाह सत्त्वरजस्तमोभिरिति. सत्वरजस्तमोभिस्त्रिभिर्युक्त इति

" त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् " ।

" त्रिगुणं कर्मिणां क्षेत्रं प्रकृते रूपमुच्यते " ॥

" सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः " ।

इत्यादिकमत्र प्रमाणम्. बद्धचेतनानां ज्ञानानन्दयोस्तिरोधायक इति, गुणत्रयात्मकतया रजस्तमोंशाभ्यां ज्ञानादेस्तिरोधायक इत्यर्थः. चेतनानां ज्ञानानन्दयोस्तिरोधायक इति सामान्येनानुक्त्वा बद्धचेतनानामिति विशेषणात् कर्मसंसृष्टचेतनानां ज्ञानादीनामेव तिरोधायकः, अन्यथा ऐच्छिकप्राकृतशरीरं परिगृह्णतां नित्यमुक्तानां ज्ञानादेरिदं सङ्कोचकरं स्यात्. अत एवाहतसहजदास्याः सूरयः स्रस्तगन्धा[१] विमलचरमदेहा इत्यमी रङ्गधाम महितमनुजतिर्यक्स्थावरत्वाश्रयन्त " इत्युक्तप्रकारेण नित्यमुक्तानामत्रागत्य प्राकृतदेहान् परिगृह्य शेष्यातिशयं कुर्वतां तदानीं सङ्कोचं न करोति. तस्माद्बद्धचेतनानां ज्ञानादेरेवेदं तिरोधायकमिति सिद्धम्. " अनीशया शोचति मुह्यमानः " " अनादिमायया सुप्तः " " भगवन्मायातिरोहितस्वप्रकाश " इत्यादि. विपरीतज्ञानजनक इति, विपरीतज्ञानमऽतस्मिंस्तद्बुद्धिः. सा चानात्मनि देह आत्मत्वबुद्धिः,अस्वतन्त्र आत्मनि स्वतन्त्रत्वबुद्धिः,अनन्यशेषे ऽन्यशेषत्वबुद्धिः, अनीश्वरेष्वीश्वरत्वबुद्धिः, अपुरुषार्थे ऐश्वर्यादौ पुरुषार्थत्वबुद्धिः, अनुपायेपूपायत्वबुद्धिरेवमादिका[२]. यथार्थज्ञानं नोत्पादयतीत्येव न, अपित्वेताद्दशविपरीतज्ञानान्यपि बद्धचेतनानामुत्पादयतीत्यर्थः. भगवत्स्वरूपतिरोधानकरीं विपरीतज्ञानजननीमिति अयमर्थो भाष्यकारैरुक्तः. नित्य[३]इति. उत्पत्तिविनाश-

---

(१) स्रस्तबन्धा इति अत्र स्थाने पुस्तके पाठोऽस्ति ।
(२) एवमादय इति पु. पा. ।
(३) नित्यमिति पु. पा.

हित इत्यर्थः. " अजामेकाम् " गौरनाद्यन्तवती सा जनित्री भूतभाविनी "

" अचेतना परार्था च नित्या सततविक्रिया " ।

" विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् " ॥

इतचादि. ईश्वरस्य क्रीडापरिकर इति, सर्वेश्वरस्य जगत्सृष्ट्यादिलीलायाः परिकर इतचर्थः.

" क्रीडतो बालकस्येव चेष्टां तस्य निशामय ।

अप्रमेयो ऽनियोज्यश्च यत्र कामगमो वशी ।

मोदते भगवान् भूतैर्बालः क्रीड़नकैरिव " ।

" त्वं न्यञ्चद्भिरुदञ्चद्भिः कर्म्मसूत्रोपपादितैः ॥

हरे विहरसि क्रीडां कन्दुकैरिव[1] जन्तुभिः " ॥—

इत्यादिभि[2]रुक्तायाः सर्वेश्वरस्य लीलाया गुणत्रयात्मिका प्रकृतिः खलु प्रधानोपकरणम्."सितासिता च रक्ता च सर्वकामदुघा विभो-" रितचादि, " दैवी ह्येषा गुणमयी मम माया दुरत्यया " इति स्वयमेवोक्तम्.

प्रदेशभेदेन कालभेदेन च सदृशासदृशविकारोत्पादक इति, प्रदेशभेदो गुणवैषम्यशून्यप्रदेशो गुणवैषम्यवान् प्रदेशश्च. अस्य गुणवैषम्यं कार्योन्मुखे स्थूले, अन्यत्र सर्वत्र साम्यापन्नगुणवदेव भवति. तत्र गुणवैषम्यशून्यः प्रदेशः सदृशविकारवान् , गुणवैषम्यवान् विसदृशविकारवान् भवति. सदृश विकारोनाम नामरूपविभागनिर्देशानर्हःसूक्ष्मविकारः,विसदृशविकारो नाम नामरूपविभागनिर्देशयोग्यः स्थूलविकारः,"गुणसाम्यमनुद्रिक्तन्यून"मित्युक्तत्वादऽव्यक्तावस्थायां सर्वेपि विकाराः सदृशा भवन्ति,महदादिर्विसदृशविकारः.

अथ कालभेदो नाम संहारकालः सृष्टिकालश्च. संहारकाले ऽस्याविभक्तमत्वेन स्थितत्वात्कुत्रापि गुणवैषम्याभावेन सर्वत्राविशेषेण

(१) कन्तुकैरिवेति पु. पा. ।

(२) इत्यादिरुक्ताया इति पुस्तके पाठः ।

सदृश एव विकारः, सृष्टिकाले भगवदधिष्ठानविशेषेण विभक्ततया कार्योन्मुखस्य गुणवैषम्ये सति विसदृशाविकारा भवन्ति. सततविकारास्पदतया ऽस्य सत्ताप्रयुक्तो हि विकारः. तस्य सौक्ष्म्यासौक्ष्म्यनिबन्धनो विभागनिर्देश एव. अन्यथा निर्विकारतया काचिदवस्था नास्ति ॥

प्रकृत्यविद्यामायापरनामाचिद्विशेष इति. मिश्रसत्वं नामैवंविधो ऽचिद्विशेष इति वाक्यान्वयः. प्रकृत्यादिनामभेदोऽस्य स्वभावप्रयुक्त इत्याह

## प्रकृतिरित्युच्यते विकारोत्पादकत्वात्. अविद्या ज्ञानविरोधित्वात्. माया विचित्रसृष्टिकरत्वात्.

प्रकृतिरित्यादिना. मूलप्रकृतिरविकृतिरित्यादौ प्रकृतिशब्दः कारणवाचितया प्रयुक्तः, स चोपादानकारणवाचकः[1]. अत एव ब्रह्मणो जगदुपादानत्वकथनावसरे सूत्रकारः [ "येनाश्रुतं श्रुतं भवत्य ऽमतं मतमऽविज्ञातं विज्ञात" मिति प्रतिज्ञा ][2] "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधा[3]" दिति प्रकृतिशब्दं प्रायुङ्क्त. अत एवेदं प्रकृतिरित्युच्यते महदादिविकाराणां स्वस्मादुत्पादनात्.

अविद्याशब्दो विद्याभावस्य विद्येतरस्य विद्याविरोधिनश्च वाचको यद्यपि, तथापि विषयानुगुणः प्रयोगो भवति, तस्मादियं ज्ञानविरोधित्वेनाऽविद्येत्युच्यते. ज्ञानानन्दयोर्विरोधीति, अस्य ज्ञानविरोधित्वं प्रागुक्तम्. यथा ऽसुरराक्षसास्त्राणि आश्चर्यकरतया मायाशब्देन व्यवह्रियन्ते, तथेयमपि विचित्रसृष्टिकरत्वान्मायेत्युच्यते. विचित्रसृष्टिकरत्वञ्च परस्परविलक्षणविस्मयनीयकार्यकरत्वम्. एवंभूताचिद्वस्तुनः कार्य्यकारणरूपेणानेकविधत्वमाह

---

(१) कारणत्ववाचक इति पु. पा.।
(२) [ ] एतच्छृङ्खलितः पाठ औपरिष्टिकटिप्पणीभूतःसंसृष्टो जात इति मन्ये।
(३) अनुपरोधादिति पु. पा.।

**इदञ्च वर्द्धमानं पञ्चविषयपञ्चेन्द्रियपञ्चभूतानि अत्र प्राणगा प्रकृतिर्म्महदहङ्कारमनांसीत्युक्तप्रकारेण चतुर्विंशतितत्त्वरूपम्म् .**

इदञ्चेतत्यादिना. पञ्च विषयाः शब्दादयः. वर्द्धमानेति-विशेषणेन चेतनान् विकृतान् कर्तुमुपयुक्तस्तेषामुद्रेक उच्यते. अत्र विशेषमात्रमपेक्षितम्. पञ्चेन्द्रियाणि श्रोत्रादीनि, कर्मेन्द्रियाणि वागादीनि, पञ्चभूतानि गगनादीनि. अत्र प्राणगेति, संसारदशायामात्मनो ऽत्यन्तसंसृष्टेत्यर्थः. अत्रापि विशेष्यमात्रमेव तत्त्वसंख्यायामऽपेक्षितम्[१]. महदहंकारमनांसि,महत्तत्वमहंकारतत्वं मनश्च. एवं चतुर्विंशतितत्त्वानि वदता दिव्यसूरिणा तन्मात्राण्यनभिधाय शब्दादयो ऽभिहिताः, तन्मात्राणां भूतैः स्वरूपभेदाभावादवस्थाभेदमात्रत्वात्. तन्मात्ररूपाणि भूतानि पञ्च पञ्चतत्त्वानि, शब्दादयः पञ्च पञ्चतत्वानीति स्वीकृत्यैतान्येकादशेन्द्रियाणि प्रकृतिमहदहंकाराश्च चतुर्विंशतितत्त्वानीति केषांचित्पक्षः. उभयपक्षेपि तत्त्वसंख्यायां न्यूनाधिकभावो नास्ति. तस्मादेतद्याशुरो[२]क्तप्रकारेण चतुर्विंशतितत्त्वरूपमित्युक्तम् ।

अनेन याशुरेण तत्त्वान्येवाभिहितानि, न तु तेषां क्रमो ऽप्युक्तः. तस्मादत्र प्रथमतत्त्वं किमित्याकाङ्क्षायामाह

**अत्र प्रथमतत्त्वम्प्रकृतिः. अस्य चाविभक्ततमो विभक्ततमो ऽक्षरमिति चावस्थाविशेषास्सन्ति .**

अत्रेत्यादि. प्रकृतिः प्रधानमव्यक्तमिति च प्रथमतत्त्वस्य नामानि. प्रकृतिरिति नाम्नो निदानं प्रागेवोक्तम्. प्रधानमिति, प्रधानमित्युच्यते भगवल्लीलायाः प्रधानोपकरणत्वात्. अव्यक्तमित्युच्यते ऽनभिव्यक्तगुणविभागत्वात्.

अथैवं प्रथमतत्त्वभूतायाः प्रकृतेरवस्थाविशेषानाह अस्य चेत्यादिना.

---

(१) संख्याया अपेक्षितमिति पु. पा.
(२) संज्ञाशब्दोऽयम् ।

अव्यक्तमक्षरे लीयते, ऽक्षरं तमसि लीयते, तमः प
देवे एकीभवती " त्युक्तप्रकारेण संसारसमये ऽव्यक्ताव
स्थानिवृत्तिरवस्था, ततस्तन्निवृत्ति, स्ततो ऽतिसूक्ष्मतया तमःश
ब्दवाच्यता, ततोऽपि नामरूपविभागानर्हतया सर्वेश्वरेणैकीभाव
भवतीत्यतो विभक्तम इति " सर्गकाले तु सम्प्राप्ते प्रादुरा
सीत्तमोनुद " इत्युक्तप्रकारेण तेन प्रेरितं सन्नामरूपविभागयोग्
यथा भवति, तथा तस्माद्विभक्तं कार्योन्मुखं भवतीति विभक्तन्त
इति, अनन्तरं सङ्कल्पविशेषेण पुरुषसमष्टिगर्भत्वं यथा ज्ञायते, तथ
ऽवस्थाम्प्राप्य स्थितत्वादक्षरमिति च अत्र केचनावस्थाविशेषाः सन्ती
त्यर्थः. तस्मादस्याविभक्ततमस्त्वं नामाक्षरावस्थानिवृत्तौ तमःशब्द
वाच्यतया नामरूपविभागानर्हतया च सर्वेश्वरविषये एकीभवनम्.
विभक्ततमस्त्वं नाम नामरूपविभागार्हता यथा स्या,त्तथा विभक्तत
कार्योन्मुखत्वम्. अक्षरत्वं नामेदमचित् अत्र पुरुषसमष्टिरिति
विवेचनानर्हमतिसूक्ष्मायास्तमोऽवस्थाया निवृत्तौ पुरुषसमष्टिगर्भत्वं
यथा ज्ञायेत, तथाविधावस्थाप्राप्तिः. गुणत्रयवैषम्यस्यानन्तरपू
र्वावस्थागुणसाम्यलक्षणमव्यक्तं यस्यामवस्थायां गुणसाम्यवैषम्य
मस्फुटं, तदवस्थस्य चेतनसमष्टिगर्भत्वमक्षरशब्देनोच्यते न तु
चेतनमात्रं, तस्याव्यक्तप्रकृतित्वतमोविकृतित्वायोगात्. अतस्स
र्वं तत्वजातं चिदचिदात्मकं मन्तव्यम्, " प्रधानादिविशेषा
न्तं चेतनाचेतनात्मक " मितिपराशरवचनात्. अत्र चिद्गर्भवस्तु
न्यक्षरशब्द उपचारतः, प्रयोगे ऽन्यथासिद्धे शक्त्यन्तरकल्पनायो
गात्. " अक्षरं तमसि लीयत " इति चिद्गर्भत्वमचित्वमपि
यत्र विवेक्तुमशक्यं, तदवस्थमतिसूक्ष्मम्प्रधानं तमःशब्देनाभिलप्य
मक्षराद्यवस्थाप्राप्तयौन्मुख्यविशिष्टं तदेव विभक्ततमः. तदौन्मुख्य
रहितमविभक्ततमः, परमात्मशरीरतयापि चिन्तयितुमशक्यं सलि
लविलीनलवणचन्द्रकान्तस्थसलिलसूर्यकान्तस्थवह्निकल्पं सर्वज्ञ
परमात्मैकवेद्यमवतिष्ठते भूतलविनिहितबीजस्थानीयमविभक्ततमः
मृन्निःसृतबीजवद्विभक्ततमः. सलिलसंसृष्टार्द्राशिथिलावयबीजतुल्य
मक्षरमुच्छूनबीजसमानमव्यक्तम् अङ्कुरस्थानीयो महानिति विवे
इति सुबालोपनिषद्व्याख्याने श्रुतप्रकाशिकाकारैरेतदवस्थाविशेषा
सुस्पष्टमभिहिताः. एतेनाक्षरतमसी कुसुमस्य मुकुलकोरकावस्था
वद ऽस्य संकोचदशारूपत्वान्महदादिवन्न तत्त्वान्तरमिति सिद्धम्

अथैतस्याः प्रकृतेर्म्महदादिविकाराणामुत्पत्तेर्म्मूलमाह

**अस्या गुणवैषम्येण महदादिविकारा जायन्ते. गुणाः सत्वरजस्तमांसि, एते प्रकृतेः स्वरूपानुबन्धि-नस्स्वभावाः प्रकृत्यवस्थायामनुद्भूता विकारदशाया-मुद्भूता भवन्ति.**

अस्या इत्यादिना. गुणानां वैषम्यं परस्परोद्रेकः. के ते गुणा इत्याकाङ्क्षायामाह गुणा इत्यादि. कीदृशास्ते इत्याकाङ्क्षायामाह एते प्रकृतेरिति.

"सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः"।
"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः"॥

सत्त्वं रजस्तम इति प्रकृतेर्गुणा इत्यादि प्रमाणं स्वरूपानु-बन्धिन इत्यागन्तुकत्वाभावेन सत्ताप्रयुक्तत्वादेतद्विनाकृता न का-प्यवस्थेति भावः. एतेषां स्वभावसत्वस्य स्वप्रकृतिस्वरूपानुबन्धि-त्वस्य चोक्त्या मूलप्रकृतिर्न्नाम सुखदुःखमोहात्मकानि लाघवप्रकाश-नचलनोपष्टम्भनगौरवावरणकार्य्याण्य ऽत्यन्तातीन्द्रियाणि कार्यैक-निरूपणविवेकान्यऽन्यूनानतिरेकाणि समतामुपेतानि सत्त्वरजस्त-मांसि द्रव्याणीत्येतान् द्रव्यत्वेन प्रकृतिस्वरूपत्वेन च स्वीकुर्वतां सां-ख्यानां मतं निरस्तम्.तन्मतनिराकरणार्थमेवयामुनाचार्या अपि गुणाः प्रधानमिति पृथगवदन्. प्रकृत्यवस्थायामनुद्भूता विकारदशायामुद्भूता इति साम्यापन्नत्वात्प्रकृत्यवस्थायामेतेषां स्वरूपविभागो न ज्ञायते, वैषम्यापत्त्या विकृत्यवस्थायां स्वरूपविभागो ज्ञायत इत्यर्थः. सत्त्वर-जस्तमांसि त्रयो गुणाः प्रकृतेस्स्वरूपानुबन्धिनः स्वभावविशेषाः कार्यैकनिरूपणीयाः प्रकृत्यवस्थायामनुद्भूतास्तद्विकारेषु महदादिषूद्भू-ता इति भाष्यकारैरुक्तम्.

विकारदशायामेतेषां कार्यैकनिरूपणीयत्वात् कार्यकथनमुखे-नैतेषां स्वरूपाणि दर्शयति

**सत्त्वं ज्ञानसुखे तदुभयसङ्गं च जनयति, र-**

**जो रागतृष्णासगान् कर्मसङ्गं च जनयति, तमो विपरीतज्ञानमऽनवधानमालस्यं निद्राञ्च जनयति**

सत्त्वमित्यादिना. सत्त्वगुणो निर्म्मलत्वाज् ज्ञानसुखावरणं विना तज्जनकं तत्प्राप्तये प्रवृत्त्यर्थं तयोः संगं च जनयतीत्यर्थः.

" तत्र सत्त्वं निर्म्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥

इत्यादि. रज इत्यादि .

" रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् " ॥

इत्यादिना. रागो योषित्पुरुषयोरन्योऽन्यस्पृहा. तृष्णा शब्दादिसर्वविषयस्पृहा. संगः पुत्रमित्रादिसंश्लेषस्पृहा. कर्म्मसङ्गः क्रियासु स्पृहा. तम इत्यादि .

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥

इतयादि. विपरीतज्ञानं नाम वस्तुयाथात्म्यविपरीतविषयं ज्ञानम्. अनवधानं क्रियमाणे ऽवधानाभावः. आलस्यं कुत्रापि कार्येऽनारम्भरूपा तन्द्रा. निद्रा पुरुषस्येन्द्रियप्रवर्तनश्रान्तिमूलका सर्वेन्द्रियप्रवर्तनोपरतिः .

अथैतेषां गुणानां समदशायां विषमदशायां च प्रकृतेर्विकारानाह

**एतेषां साम्यदशायां विकाराः समा अस्पष्टाश्च भवन्ति, वैषम्यदशायां विकारा विषमाः स्पष्टाश्च भवन्ति .**

एतेषां साम्यदशायामित्यादिना. एतेषां गुणानां परस्परोद्रेकं वा कृत्स्नोद्रेकं वा विना साम्यापत्तिदशायां प्रकृतेर्विकारा नाम

राहित्येन मिथः समाः प्रमाणैर्दर्शयितुं[1]मयोग्या अस्पष्टाश्च भवन्ति. एतद्गुणानामुद्रेकेण वैषम्ये प्रकृतेर्विकारा नामरूपविशेषसाहित्येन परस्परं विषमाः प्रमाणैर्द्दर्शयितुं योग्याः स्पष्टाश्च भवन्तीत्यर्थः. प्रदेशभेदेन कालभेदेनेति पूर्वोक्तस्यैतद्गुणवैषम्यमेव हेतुः तदत्र विशदम्.

एतद्गुणवैषम्यप्रयुक्तेषु विकारेषु प्रथमविकारः क इत्याकाङ्क्षायामाह

## विषमविकारेषु प्रथमविकारो महान् . अयं सात्विकराजसतामसभेदेन त्रिविधो ऽध्यवसायजनकः.

विषमविकारेष्वित्यादि .

> " गुणसाम्यात्ततस्तस्मात्क्षेत्रज्ञाधिष्ठितान्मने ।
> गुणव्यञ्जनसम्भूतिः सर्गकाले द्विजोत्तम " ॥

इत्यादि. अस्यार्थः–गुणसाम्यवतः क्षेत्रज्ञेन बद्धचेतनेनाधिष्ठितात् अव्यक्ताद्व्यक्तगुणोन्मेषहेतुतया गुणव्यञ्जनसंज्ञकान्महत्तत्वमुत्पन्नमिति. अस्व स्वरूपं कीदृशमित्याकाङ्क्षायामाह अयं चेत्यादि . इदम्महत्तत्वं " सात्विको राजसश्चैव तामसश्च त्रिधा महान् " इत्युक्तप्रकारेण प्रकाशप्रवृत्तिमोहान्नेयसत्त्वरजस्तमोरूपगुणान्वयेन सात्त्विकं राजसं तामसं चेति त्रिविधम्. महान्वै बुद्धिलक्षण इति बुद्धिलक्षणत्वादध्यवसायजनक इत्यर्थः, अत्र सात्विकबुद्धिर्न्नाम

> प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्ये भयाभये ।
> बन्धं मोक्षं च या वेत्ति, बुद्धिः सा पार्थ सात्विकी ॥

इति प्रवृत्तिनिवृत्त्योः कार्याकार्ययोर्भयाभययोर्बन्धमोक्षयोश्च यथावदध्यवसायः[2]. राजसबुद्धिर्न्नाम

> " यया धर्ममधर्मञ्च कार्यं चाकार्यमेव च ।

---

(१) दर्शितुमिति पुस्तकपाठस्तु न युक्तः ।
(२) यथाऽध्यवसाय इति पु. पा. ।

अयथावत्प्रजानाति, बुद्धिस्सा पार्थ राजसी ॥

इति धर्माधर्मयोः कार्य्याकार्ययोरयथावन्निर्णयः, तामसबुद्धिर्नाम

अधर्मं धर्ममिति या मन्यते तमसा वृता ।
सर्वार्थान् विपरीतांश्च, बुद्धिः सा पार्थ तामसी ॥

इत्यधर्मस्य धर्मत्वेन धर्मस्याधर्मत्वेन सर्वेषामर्थानां वैपरीत्येन निर्णय इति भगवता गीतोपनिषदि स्वयमुक्तम् . एवं प्रकृते[१]र्विषमविकारेष्वयं प्रथमविकार इति तस्य स्वरूपं तस्य कृत्यं चोक्तम् .

अथान्येपि विकाराः क्रमेणोच्यन्ते

**अतो वैकारिकतैजसभूतादिभेदेन त्रिविधोऽहङ्कारो जायते. अहङ्कारोऽभिमानहेतुः ।**

अत इत्यादिना. अतः अस्मा न्महत्तत्वात्

वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ।
त्रिविधोऽयमहङ्कारो महत्तत्वादजायत ॥

इत्युक्तप्रकारेण सात्विकराजसतामसरूपभेदेन वैकारिकतैजसभूतादिसंज्ञितस्त्रिविधो ऽहङ्कारो जायत इत्यर्थः. एतेन त्रिगुणात्मिकाया मूलप्रकृतेरुत्पत्तेर्महानपि त्रिगुणात्मकः, तथैव त्रिगुणात्मकान्महत उत्पत्तेरहङ्कारोपि त्रिगुणात्मक इत्युक्तम् । अहङ्कार इत्यादि, देहात्माभिमानादिजनक इत्यर्थः. अनेनास्य कृत्यमुक्तम् ।

**अत्र वैकारिकात् श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणरूपाणि ज्ञानेन्द्रियाणि पञ्च, वाक्पाणिपादपायूपस्थरूपाणि कर्मेन्द्रियाणि पञ्च, मनश्चेत्येकादशेन्द्रियाणि जायन्ते.**

(१) प्रकृतिरिति पु. पा. ।

अत्र वैकारिकादितचादि. एवं त्रिविधेष्वहङ्कारेषु वैकारिकः सात्त्विकाहङ्कारः, ततः सत्वकार्यलघुप्रकाशयुक्तानि एकादशेन्द्रियाणि जायन्त इत्यर्थः. 'वैकारिकादेकादशेन्द्रियाणि जायन्त' इत्येतावदनुक्त्वा 'श्रोत्रत्वक्चक्षुजिह्वाघ्राणरूपाणि ज्ञानेन्द्रियाणि पञ्च, वाक्पाणिपादपायूपस्थरूपाणि कर्म्मेन्द्रियाणि पञ्च, मनश्चेत्येकादशेन्द्रियाणी' त्युक्तिः 'एतेषां कार्यभेदं संज्ञाभेदञ्च विना स्वरूपभेदो व्यवहारभेदश्च न भासेते' तदाशयेन. मनसः कार्यमुभयसहकारित्वम्. अत्र तदनभिधान, मुत्तरत्रास्य विस्तरेण प्रतिपादनसमये वक्ष्यमाणत्वात्. इन्द्रियाणि सात्विकाहङ्कारकार्य्याणीत्युक्तत्वात्तानि राजसाहङ्कारकार्य्याणीति पक्षः प्रतिक्षिप्तः

"तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ।
एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः" ॥

इति "अग्निर्वाग्भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वा ऽक्षिणी प्राविशत्, दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्, ओषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशन्, चन्द्रमा मनो भूत्वा हृदयं प्राविशत्, मृत्युरपानो भूत्वा नाभिम्प्राविशत्, आपो रेतो भूत्वा शिश्नम्प्राविशन्" इत्युक्तप्रकारेण देवाधिष्ठितत्वाद्देवशब्दवाच्यानीन्द्रियाण्येकादश राजसाहङ्कारकार्य्याणीति केचनाहुः, केचित्सात्विकाहङ्कारकार्याण्याहुरित्युक्त्वा तत्र सात्विकाहङ्कारकार्य्याणीति पक्षस्यैव स्वपक्षत्वेन श्रीपराशरेण भगवता निश्चितत्वादेवमेतदुक्तेर्न्न विरोधः. इन्द्रियाण्येकादशेति नियमो न व्यष्टिविषयो ऽपि तु समष्टिविषयः,

तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम् ।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्म्ममे ॥

इति, अणुत्वात्सूक्ष्मानिन्द्रियाणामंशान् आत्ममात्रासु प्रवेश्य सर्वभूतानीश्वरः ससर्जेति मनुवचनात्. अत्र सूक्ष्मानित्यभिधानात् "अणवश्च" तिसूत्रमर्यादयेन्द्रियाण्यणव इति, अवयवानित्युक्त्या प्रतीन्द्रियं व्यक्तिबाहुल्यमस्तीति, आत्ममात्रासु प्रवेश्येत्युक्त्या ऽऽदौ दत्तान्येवेद्रियाणि यावत्संहारमनुवर्त्तन्त इति च

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।

गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥

इत्युक्तप्रकारेण शरीरं तयक्त्वा शरीरान्तरप्रवेशसमये इन्द्रियाणि गृह्णन्नेव गच्छतीति गम्यते. 'षण्णा'मिति 'मनःषष्ठानी'ति संख्यानिर्देशे निर्बन्धो नास्ति, इन्द्रियान्तराणामपि सहगमनात्.

अथ "भूततन्मात्रसर्गो ऽयमहङ्कारात्तु तामसात्" इत्युक्तप्रकारेण भूतादिशब्दवाच्यात्तामसाहङ्कारात्तन्मात्रपञ्चकस्य तद्विशेषाणामाकाशादिभूतानाञ्चोत्पत्तिक्रममाह

**भूतादेश्शब्दतन्मात्रं जायते. अस्मादाकाशः स्पर्शतन्मात्रञ्च जायते. तस्मात्तेजो रसतन्मात्रञ्च जायते. तस्मात्पृथिवी जायते,**

भूतादेरित्यादिना . भूतादिसंज्ञितात्तामसाहङ्कारादाकाशस्य सूक्ष्मावस्था शब्दतन्मात्रा जायत इत्यर्थः. अस्मादित्यादि, अस्माच्छब्दतन्मात्रात्तत्स्थूलावस्थारूपो ऽव्यक्तशब्दगुणक आकाशो, वायोः सूक्ष्मावस्थारूपं स्पर्शतन्मात्रञ्च जायते. तस्माच्छब्दस्पर्शतन्मात्रात्तस्य स्थूलावस्थारूपः शब्दस्पर्शगुणको वायु, स्तेजसः सूक्ष्मावस्थारूपं रूपतन्मात्रं च जायते. तस्माद्रूपतन्मात्रात्तस्य स्थूलावस्थारूपं रूपगुणकं तेजो, ऽपां सूक्ष्मावस्थारूपं रसतन्मात्रञ्च जायते. तस्माद्रसतन्मात्रात्तस्य स्थूलावस्थारूपा रसगुणका आपः, पृथिव्याः सूक्ष्मावस्थारूपं गन्धतन्मात्रञ्च जायते. तस्माद्गन्धतन्मात्रात्तस्य स्थूलावस्थारूपा गन्धगुणका पृथिवी जायत इत्यर्थः. 'आकाशः स्पर्शतन्मात्रञ्च जायते वायू रूपतन्मात्रञ्च जायत' इत्युत्पत्तिक्रमकथनसमये प्रथमं भूतोत्पत्तेरनन्तरं तन्मात्रोत्पत्तेश्चाभिधानं भूतोत्पत्त्यनन्तरं तन्मात्रोत्पत्तिरिति क्रमज्ञापनार्थम्[1]. एतत्तन्मात्रोत्पत्तिक्रमो ऽस्मदाचार्य्याणामतीवादरणीयः, तत्र निदानम् "अष्टौ प्रकृतयः षोडश विकारा" इति श्रुतेः स्वरसार्थसिद्धिः. 'ईश्वरात्प्रकृतिपुरुषौ, प्रकृतेर्महान्, महतोऽहङ्कारो

(१) ज्ञानार्थमिति पु. पा.।

ऽहङ्काराच्छब्दतन्मात्रम्, शब्दतन्मात्रादाकाशं स्पर्शतन्मात्रञ्च, स्पर्शतन्मात्राद्वायू रूपतन्मात्रञ्च, रूपतन्मात्रात्तेजो रसतन्मात्रञ्च, रसतन्मात्रादापो गन्धतन्मात्रञ्च, गन्धतन्मात्रात्पृथिवीत्येतत्क्रमं यादवप्रकाशादयो ऽभ्याहृतवन्तः ।

अथ भूतात्तन्मात्रोत्पत्तिक्रमस्यापि शास्त्रसिद्धत्वात्तमपि सङ्ग्रहेणाह

**' स्पर्शतन्मात्रप्रभृतीनि चत्वारि तन्मात्राण्याऽऽकाशप्रभृतीनाञ्चतुर्णां भूतानां कार्य्याणि वायुप्रभृतीनां चतुर्णाम्भूतानाङ्कारणानि भवन्ती ' त्यपि वदन्ति ।**

स्पर्शतन्मात्रेत्यादिना. अयं क्रमः, भूतादेः शब्दतन्मात्रं जायते. शब्दतन्मात्रादाकाशो जायते. आकाशात्स्पर्शतन्मात्रं जायते. स्पर्शतन्मात्राद्वायुर्जायते. वायो रूपतन्मात्रं जायते. रूपतन्मात्रात्तेजो जायते. तेजसो रसतन्मात्रं जायते. रसतन्मात्राज्जलं जायते. जलाद्गन्धतन्मात्रं जायते. गन्धतन्मात्रात्पृथिवी जायत इति. अयं क्रमः श्रीविष्णुपुराणसिद्धः, पूर्वक्रमः पुराणान्तरसिद्ध इति वदन्ति, तदयुक्तम्, अष्टौ प्रकृतयः षोडश विकारा इत्याकाशादीनां भूतानाम्पञ्चानामिन्द्रियाणामिव केवलविकृतित्वोक्तेः श्रीविष्णुपुराणे-"आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज हे"त्यारभ्य स्पर्शतन्मात्रादिकारणत्वेनोक्तानामाकाशादिपदार्थानां तन्मात्रलक्षणभूतत्वं श्रीपराशरेण भगवता विवक्षितमितिव्याख्यानात्. तस्माच्छ्रीविष्णुपुराणे भूतात्तन्मात्रोत्पत्तिशब्ददर्शनेपि व्याख्यानप्रक्रियालोचने तन्मात्रात्तन्मात्रोत्पत्तिरेव स्वीकर्तव्या. भूतात्तन्मात्रोत्पत्तिपक्षे चाष्टौ प्रकृतयः षोडश विकारा इत्युक्ताः षोडश विकाराश्च भूतव्यतिरिक्ता एकादशेन्द्रियाणि शब्दादयः पञ्चेति तन्मात्राणां भूतेभ्यः स्वरूपभेदाभावादवस्थाभेदमात्रत्वात् अष्टौ प्रकृतयः प्रकृतिमहदहङ्कारा आकाशादयः पञ्चेति उच्यन्त इति श्रुत्यविरोधेन निर्वहन्ति. अयमर्थो भगवता श्रीवेदव्यासेन

अष्टौ प्रकृतयः प्रोक्ता विकाराश्चैव षोडश ।
अथ व्यक्तानि सप्तैव प्राहुरध्यात्मचिन्तकाः ॥
अव्यक्तं च महांश्चैव तथाहंकार एव च ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥
एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु ।
श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणञ्च पञ्चमम् ।
वाक् च हस्तौ च पादौ च पायुर्मेढ्रन्तथैव च ।
शब्दस्पर्शौ च रूपञ्च रसो गन्धस्तथैव च ॥
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ।
दशेन्द्रियाण्यथैतानि सविशेषाणि मैथिल ॥
मनः षोडशमित्याहुरध्यात्मगतिचिन्तकाः ॥

इति मोक्षधर्मे याज्ञवल्क्यजनकसंवादे उक्तः, तथा मनुस्[...]

" मनो बुद्धिरहङ्कारः खानिलाग्निजलानि भूः ।
एताः प्रकृतयस्त्वष्टौ विकाराः षोडशापरे ।
श्रोत्राक्षिरसनाघ्राणत्वचः सङ्कल्प एव च ॥
शब्दरूपरसस्पर्शगन्धवाक्पाणिपायवः ।
उपस्थपादाविति च विकाराः षोडश स्मृताः ॥

इत्युक्तम्. अस्यां स्मृतौ प्रकृतिषु परिगणितत्वात्प्रथमं नि[...]च मन्तव्यतया मनःशब्देन प्रधानतत्त्वमुच्यते, संकल्पशब्दे[...]त्कारणं मनो लक्ष्यत इति सुबालोपनिषद्व्याख्याने श्रुतप्रकाशि[...]कारैर्व्याख्यानं कृतम्. एवमितिहासादिष्वभिहितत्वात् अष्टौ प्र[...] इति श्रुतेर्भूतात्तन्मात्रोत्पत्तिपक्षे तत्त्वविरोधाभावः सुस्पष्टः "[...]चाबीज[1]मिवावृत " मिति दृष्टान्तबलेन यथा त्वक्छून्यबीजस्या[...]रशक्तिर्नास्ति, तथावरणशून्यस्योत्तरकार्यशक्तिर्नास्तीति भा[...]कारणगुणं विनोत्तरोत्तरगुणविशेषेषु

" आद्याद्यस्य गुणानेतानाप्नोति च परःपरः "

इति स्वविशेषस्योक्तगुणातिशयानुपपत्तेः,

आकाशं शब्दमात्रं तु स्पर्शमात्रं समाविशत् ।
रूपं तथैवाविशतः शब्दस्पर्शगुणावुभौ ॥
शब्दः स्पर्शश्च रूपं च रसमात्रं समाविशत् ।
तस्माच्चतुर्गुणा ह्यापो विशेषाश्चेन्द्रियग्रहाः " ॥

(१) त्वचावृत्तमिवावृत्तमिति पु. पा. ।

इति पुराणवचनानुगुण्यार्थञ्च तेभ्यस्तन्मात्रेभ्यो यथासंख्यमेकद्वित्रिचतुष्पञ्चभ्यो भूतान्याकाशानिलानलसलिलावनिरूपाणि पञ्च जायन्त इति अत्राधिकृतस्य सांख्यवाचस्पतेरुक्तेश्च कार्योत्पादकानि स्वस्वकारणभूतान्येवोत्पादयन्तीति स्वीकर्तव्यमिति तत्त्वत्रयविवरणे श्रीकृष्णपादैरुक्तत्वाच्च,

प्रधानतत्त्वमुद्भूतं महान्तं तत्समावृणोत् ।
यथा प्रधानेन महान् महता स तथा वृतः ॥
शब्दमात्रं तथाकाशं भूतादिश्च समावृणोत् ।
आकाशं शब्दमात्रन्तु स्पर्शमात्रन्तथाऽवृणोत् ॥
स्पर्शमात्रस्तु वै वायू रूपमात्रं समावृणोत् ।
रूपमात्रन्तु तेजश्च रसमात्रं समावृणोत् ।
रसमात्राणि चाम्भांसि गन्धमात्रं समावृणोत्" ॥

इति भगवता पराशरेणोक्तत्वात् पूर्वपूर्वतन्मात्रैर्मिलित्वोत्तरोत्तरतन्मात्रैः स्वस्वविशेषोत्पादनादिति स्वयं वक्ष्यमाणत्वाच्चावरणक्रमः स्वीकर्तव्यः. तथैव पूर्वभावनियमार्थं स्पर्शतन्मात्रादीनां स्वस्वविशेषोत्पादने स्वस्वपूर्वभूतसहायत्वमावश्यकम् ।

अत्रायं क्रमः, भूतादेः शब्दतन्मात्रं जायते, शब्दतन्मात्रं भूतादिरावृणोति. तत आकाशं जायते. ततोऽस्माच्छब्दतन्मात्रात्स्पर्शतन्मात्रं जायते, शब्दतन्मात्रमावृणोति. एवं शब्दतन्मात्रावृतादाकाशसहायकात्स्पर्शतन्मात्राद्वायुर्जायते. ततोऽस्मात्स्पर्शतन्मात्राद्रूपतन्मात्रं जायते, रूपतन्मात्रं स्पर्शतन्मात्रमावृणोति, एवं स्पर्शतन्मात्रावृताद्वायुसहायकाद्रूपतन्मात्रात्तेजो जायते. तस्माद्रूपतन्मात्राद्रसतन्मात्रं रूपतन्मात्रमावृणोति. एवं जायते, रसतन्मात्रं रूपतन्मात्रावृतात्तेजःसहायकाद्रसतन्मात्रादापो जायन्ते. तस्माद्रसतन्मात्राद्गन्धतन्मात्रं जायते, रसतन्मात्रमावृणोति. एवं रसतन्मात्रावृतादप्सहायकाद्गन्धतन्मात्रात्पृथिवी जायत इति शब्दतन्मात्रावृतादाकाशसहायकात्स्पर्शतन्मात्राद्वायुर्जायत इत्यारभ्योक्तविशेषोत्पत्तिक्रमो भूतात्तन्मात्रोत्पत्तिपक्षेऽपि समानः. पूर्वपूर्वभूतादुत्तरोत्तरतन्मात्रोत्पत्तिरत्र विशेषः. अयं क्रमस्तत्त्वत्रयविवरणे कृष्णपादैरुक्तः.

तत्वनिरूपणे वेदान्तिभिरुक्तः कश्चन क्रमोऽस्ति. स च भूतादेः शब्दतन्मात्रं जायते शब्दतन्मात्रात्तस्य स्थूलावस्था रूप

आकाशो जायते, शब्दतन्मात्रमाकाशञ्च भूतादिरा वृणो
भूताद्यावृतात्स्थूलाकाशसहकृताद्विकृताच्छब्दतन्मात्रात्स्पर्शतन्मात्रं
जायते. ततः स्पर्शगुणो वायुर्जायते, तदुभयमपि कारणभूतं शब्दत-
न्मात्रमावृणोति शब्दतन्मात्रावृताद्वायुसहकृताद्विकृतात्स्पर्शतन्मा-
त्राद्रूपतन्मात्रं जायते. ततो रूपगुणकं तेजो जायते. तदुभयमपि का-
णभूतं स्पर्शतन्मात्रमावृणोति, तदावृतात्तेजःसहकृताद्विकृताद्रूपत-
न्मात्राद्रसतन्मात्रं जायते, ततो रसगुणकं जलं जायते, तदुभयम-
पि स्वकारणं रूपतन्मात्रमावृणोति. तदावृतादम्भःसहकृताद्विकृता-
द्रसतन्मात्राद्गन्धतन्मात्रं जायते. ततो गन्धगुणका पृथिवी जायते, त-
दुभयं कारणभूतं रसतन्मात्रमावृणोति।

अत्र पूर्वक्रमे स्पर्शतन्मात्रादिचतुष्टयस्य स्वस्वविशेषोत्पत्तौ
पूर्वपूर्वभूतसाहाय्यकरत्व[1]मुक्तम्. अनन्तरक्रमे पूर्वतन्मात्रस्योत्तर-
तन्मात्रोत्पादने स्वस्वविशेष साहाय्यकरत्व[1]मुक्तम्, तस्मान्न मिथो
विरोधः, एकैकस्मिन्ननुक्तावपि उभयोरपेक्षितत्वात्।

आवरणक्रमे च पूर्वपूर्वतन्मात्रमुत्तरोत्तरतन्मात्रं तद्विशेषं
चावृणोतीति वेदान्तिभिरुक्तत्वात्. श्रीविष्णुपुराणे "शब्द-
मात्रं तथाऽऽकाशं भूतादिः स समावृणो" दित्यस्य शब्दतन्मात्रं
तथाकाशं स्थूलाकाशं च स भूतादिरावृणोत्. एतेन पूर्वपूर्वतन्मात्र-
मुत्तरोत्तरतन्मात्रं तद्विशेषं चावृणोदिति दर्शितमिति पिल्लैपेरुमा-
ल्वाराचार्यैर्व्याख्यातत्वात्. तत्वत्रयविवरणे तन्मात्रस्यावरणं,
तद्विशेषस्यावरणस्यानभिधानेपि तदुपलक्षणम्. अन्यथा तत्र भूत-
तन्मात्रोत्पत्तिकथनञ्च न सम्भवति. तस्मादुभयमपि स्वीकर्तव्यम्।

तत्त्वनिरूपणे तन्मात्रतद्विशेषयोरुभयोरावरणकथनाव-
उभयोस्तन्त्रेणाभिधाने ऽपि विशेषोत्पत्तेः प्राक् तन्मात्रा-
रणं स्वीकार्यम्. त्वग्रहितबीजस्याङ्कुरशक्तिरिवावरणशून्यस्यो-
त्तरकार्यशक्तिर्नास्तीति प्रागेवोक्तम्. एवंभूतात्तन्मात्रसृष्टिक्रम-
समये आवरणक्रमस्य वक्तव्यत्वे ऽप्यनभिधानमनपेक्षितत्वादि-
संकोचेनोत्पत्तिक्रमो[2] ऽभिहितः. श्रीकृष्णपादैरप्येवमेवोक्तम्.
भूततन्मात्रोत्पत्तिक्रम उक्तः।

अथ कानि तन्मात्राणीति शङ्कायामाह

(१) साहाय्यकत्वमिति पु. पा.।
(२) उत्पत्त्यतिक्रम इति पु, पा.।

**तन्मात्राणि भूतानां सूक्ष्मावस्थाः ।**

तन्मात्राणीत्यादि .

तस्मिँस्तस्मिँस्तु तन्मात्रं तेन तन्मात्रता स्मृता ।
तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते ॥
न शान्ता नापि घोरास्ते न मूढाश्चाऽविशेषिणः[१] ।

इति शान्तत्वघोरत्वमूढत्वलक्षणविशेषणशून्यशब्दादितन्मात्रगुणकान्याकाशादिभूतानि तन्मात्राणि . शान्तत्वमनुकूलवेदनीयत्वम् , घोरत्वम्प्रतिकूलवेदनीयत्वम् , मूढत्वमुदासीनवेदनीयत्वम् . तत्र स्वभावत एव शान्ते भूमिजले, घोरौ तेजोवायू , मूढ आकाशः . मेलनेन सर्वाण्यपि भूतानि शान्तत्वघोरत्वमूढत्ववन्ति . तन्मात्राण्येतच्छान्तत्वादिविशेषाभावादविशेषाण्युच्यन्ते, तस्मात्तन्मात्रविशेषशब्दौ पर्य्यायौ.

अत्राभियुक्ता यादवप्रकाशादयः, तन्मात्राण्यविशेषाणीत्यनर्थान्तरम् . शान्तत्वं घोरत्वं मूढत्वमिति त्रयो विशेषास्त्रैगुण्यात्मानस्तेषामनुद्भवात् सूक्ष्ममाकाशमविशेषलक्षणं भवति, तेन शब्दतन्मात्रमुच्यते . एवं सूक्ष्मो वायुः, सूक्ष्मं तेजः, सूक्ष्मा आपः, सूक्ष्मा पृथिवीत्याहुः. एवं त्रिविधाहङ्कारेषु सात्त्विकाहङ्कारादेकादशेन्द्रियाणां तामसाहङ्काराद्भूततन्मात्राणामुत्पत्तिक्रम उक्तः ।

अथ राजसाहङ्कारकार्य्यमुच्यते .

**अन्याभ्यामहङ्काराभ्यां स्वकार्य्यजनने राजसाहङ्कारः सहकारी भवति ।**

अन्याभ्यामहङ्काराभ्यामित्यादिना. सात्विकतामसाहङ्काराभ्यां स्वकार्योत्पादने बीजाङ्कुरस्य जलवदग्निज्वलनस्य वायुवद्राजसाहङ्कारस्सहकारी भवतीत्यर्थः . अस्य सहकारित्वन्नाम “रजः प्रवर्तकं तत्रे” त्युक्तप्रकारेण तत्रेन्द्रियहेतोः सत्त्वांशस्य भूतहेतोस्तमोंशस्य च चलनस्वभावेन रजसा प्रेरकेण प्रवर्तनम्. एवं सात्विकतामसाहङ्कारयोः साधारणं सहकारित्वमुक्तवान् .

अथ सात्विकाहङ्कारस्यासाधारणान् सहकारिविशेषानाह

**सात्त्विकाहङ्कारः शब्दतन्मात्रादिपञ्चकं सह-**

---

(१) न मूढाश्च विशेषणा इति पुस्तकस्थः पाठः ।

**कार्य्याऽऽसाद्य श्रोत्रादिज्ञानेन्द्रियाणि पञ्च सृजति, तानि सहकार्यासाद्य वागादिकर्म्मेन्द्रियाणि पञ्च सृजति, सहकारिणं विना स्वयमेव मनः सृजतीति वदन्ति।**

सात्विकाहङ्कार इत्यादिना. सात्त्विकाहङ्कार इन्द्रियोत्पादनसमर्थे तेषां विषयप्रतिनियमार्थं शब्दतन्मात्रं सहकार्यासाद्य श्रोत्रं, स्पर्शतन्मात्रं सहकार्य्यासाद्य त्वगिन्द्रियं, रूपतन्मात्रं सहकार्य्यासाद्य चक्षु, रसतन्मात्रं सहकार्यासाद्य जिह्वां, गन्धतन्मात्रं सहकार्यासाद्य घ्राणेन्द्रियं च जनयति. एवं शब्दतन्मात्रादिपञ्चकसहकारेण श्रोत्रादिज्ञानेन्द्रियपञ्चकसृष्ट्यनन्तरं श्रोत्रग्राह्यशब्दविषयं, त्वग्ग्राह्यस्पर्शविषयं, चक्षुर्ग्राह्यं रूपं प्रवृत्तिहेतुं, रसनाग्राह्यरसाश्रयस्य जलस्य निःसरणहेतुं, घ्राणविषयगन्धाश्रयपृथिव्यंशान्नादेर्ऋजीषोत्सर्जनहेतुं च ज्ञानेन्द्रियपञ्चकशेषाणि शब्दादिपञ्चकावलम्बीनि कर्म्मेन्द्रियाणि पञ्च सृजति. तदानीञ्च श्रोत्रसहकारेण वाचं, त्वक्सहकारेण पाणिं, चक्षुःसहकारेण पादं, जिह्वासहकारेणोपस्थं, घ्राणसहकारेण पायुं च सृष्ट्वा ज्ञानेन्द्रियाणां कर्म्मेन्द्रियाणां च सहकार्युभयात्मकं मनः सहकारिनिरपेक्षं स्वयमेव सृजतीति तत्त्वविदो वदन्तीत्यर्थः।

अयमर्थः श्रीविष्णुपुराणव्याख्याने ऽयमेवेन्द्रियसृष्टिक्रमः वैकारिकाहङ्कारात् क्रमेण शब्दादिपञ्चसहायात् क्रमेण श्रोत्रादिज्ञानेन्द्रियपञ्चकसृष्टिः, तस्मादेव तत्सहायाद्वागादिकर्म्मेन्द्रियपञ्चकस्याऽसहायात्तस्मान्मनसः सृष्टिरिति पिल्लैपेङ्गलाल्वाराचार्यैरुक्तः.

अथ स्वोक्तस्येन्द्रियोत्पत्तिक्रमस्य विरोधिनं पक्षं निरसितुं तमुत्क्षिपति

**केचिदिन्द्रियेषु कानिचिद्भूतकार्याणीति वदन्ति, तच्छास्त्रविरुद्धम्, भूतान्याप्यायकानि।**

केचिदित्यादिना. ते च घ्राणादीन्द्रियाणि पृथिव्या-

दिभूतकार्याणीति स्वीकुर्वन्तो नैयायिकाः. ते ह्यानुमानिका अनु-
मानेनैवार्थं साधयन्ति. तत् कालात्ययापदेशेन दूषयति तदिति. तत्
इन्द्रियाणां भूतकार्यत्वाभिधानम्. एतेषामाहङ्कारिकत्वमभिदध-
तामितिहासपुराणादीनां विरुद्धमित्यर्थः.
नन्विदमनुपपन्नम्, मोक्षधर्मे

"शब्दः श्रोत्रं तथा खानि त्रयमाकाशसम्भवम् ।
वायोः स्पर्शस्तथा चेष्टा त्वक् चैव त्रितयं स्मृतम् ॥
रूपं चक्षुस्तथा व्यक्तिस्त्रितयं तेज उच्यते ।
रसः क्लेदश्च जिह्वा च त्रयो जलगुणास्स्मृताः ॥
घ्राणं घ्रेयं शरीरं च ते तु भूमिगुणास्स्मृताः" ।

इत्युक्तत्वादितिहासादिष्विन्द्रियाणां भौतिकत्वकथनाद्भूता-
न्येतेषां कारणं कुतो न भवन्तीत्याशङ्कायां भूतान्येतेषामाप्यायका-
नीत्याह भूतानीत्यादिना. तथाचेतिहासादिषूक्तस्येन्द्रियाणां भौति-
कत्वस्य भूतजन्याप्यायनमात्रनिबन्धनत्वात् इन्द्रियाणाम्भूतान्या-
प्यायकानि न कारणानीत्यर्थः. आप्यायकत्वन्नाम पोषकत्वम्.

अथाहङ्कार इन्द्रियाणां निमित्तकारणं, भूतान्युपादानकारण-
मिति केषाञ्चित्कुदृष्टीनाम्मतम्. अहङ्कारस्येन्द्रियाणि प्रति नि-
मित्तत्वमेव भूतानामेवोपादानत्वम्, "अन्नमयं हि सोम्य मन,
आपोमयः प्राण, स्तेजोमयी वा" गितिश्रुतेरिति केचिदाहुः.
तदयुक्तम्, अहङ्कारस्यैवोपादानत्वे ऽपि भूतानामाप्यायकत्वेनाऽपि
तथानिर्देशोपपत्तेरिति विष्णुपुराणव्याख्याने आशङ्क्य निराकृ-
तं, तदऽपी[1]न्द्रियेषु कानिचिदित्यारभ्यैतदुक्तक्रमेण प्रतिक्षिप्तं तदा.
तच्छास्त्रविरुद्धमिति, "एकादशं मनश्चात्र देवा वैकारिकास्स्मृता"
इत्यादिभिरेषां सात्त्विकाहङ्कारकार्यत्वमभिदधद्भिः पुराणादिभिर्विरु-
द्धमित्यर्थः. पुराणाद्यपेक्षया ऽन्नमयं हि सोम्य मन इत्यादिश्रुतेः प्रा-
बल्ये ऽपि इतिहासपुराणाभ्यां वेदं समुपबृंहयेदित्युक्तत्वादुपबृंह-
णानुकूल्येन तस्यार्थो वर्णनीय इति भावः.

ननु तर्ह्युपबृंहणेष्वपि भौतिकत्वाभिधानादेतेषां भूतानि 'का-
रणानी' ति ज्ञायन्त इति चेन्न, भूतान्याप्यायकानीति निर्वाहात्.
घ्राणादीनामिन्द्रियाणां पृथिव्यादिभूतकृतमाप्यायनं श्रुतिस्मृतिषु
प्रसिद्धम्. अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्"

---

(१) तदापीति पु. पा. ।

" श्रोत्रं नभो घ्राणमुक्तं पृथिव्या " इत्यारभ्य " वाय्वात्मकं स्पर्शं मामनन्ति, नभः श्रोत्रं च तन्मय "मित्यादिभिरिदं भूतप्राकाशिकारैरभिहितम्. एवमिन्द्रियाणां भूतानि सदाप्यायकानीति मोक्षधर्मे भृगुभारद्वाजसंवादे " आप्यायन्ते च ते नित्यं तद्वदेव पञ्चभि "रिति सुव्यक्तमुक्तम्. तस्माद्भूतानीन्द्रियाणामाप्यायकानि न तु कारणनीति सिद्धम् ॥

एवम्महदादिपदार्थानामुत्पत्तिक्रमो ऽभिहितः. एतैरीश्वरस्याण्डसृष्ट्यादिप्रकारमाह

**एतेषाम्मेलनं विना कार्य्यकरत्वाभावात्, यथा कश्चिन्मृदं शर्करां जलं च मेलयित्वैकं द्रव्यं कृत्वा भित्तिङ्करोति, तथेश्वर एतत्सर्वं मेलयित्वा तैरेकमण्डं सृजति.**

एतेषामित्यादिना. एतेषाम्मेलनं विना कार्यकरत्वाभावादिति

" नानावीर्य्याः पृथग्भूतास्ततस्ते संहतिं विना ।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः " ॥

इत्युक्तप्रकारेण शान्तत्वघोरत्वमूढत्वादिभिर्नानाशक्तियुक्तानां पृथग्भूतानां महदादिपदार्थानां परस्परसङ्गतिमप्राप्याण्डरूपकार्योत्पादनसामर्थ्याभावादित्यर्थः. मृदमित्यादिभित्तिं करोतीत्यन्तस्य पृथग्वीर्याणि पृथक्स्थितानि मृत्सिकतासलिलानि मिथो मेलयित्वा तत्समुदायात्मकन्द्रव्यं कृत्वा तेन भित्तिरूपमेकङ्कार्य्यं रचयतीत्यर्थः. ईश्वर एतत्सर्वमित्यादि, जगत्स्रष्टेश्वरैः

समेत्यान्योऽन्यसंयोगं परस्परसमाश्रयाः ।
एकसंघातलक्षाश्च सम्प्राप्यैकमशेषतः ॥
महदादिविशेषान्ता ह्यण्डमुत्पादयन्ति ते ।

इत्युक्तप्रकारेणैतत्सर्वमन्योऽन्यसङ्गतङ्कृत्वा एतैरण्डसृष्टिं करोतीत्यर्थः. एतदण्डस्यान्तर्महदादिकार्याणां सर्वेषां दर्शनात् महदादिपदार्थान्सर्वानेकीकृत्य सृष्टिमकरोदिति सुव्यक्तम्. अत एव "भूतेभ्यो ऽण्डं महाबुद्धे बृहत्तदुदकेशय " मिति भूतेभ्यो ऽण्डमुत्पन्नमुदके तिष्ठतीतीदमुपलक्षणम्.

अप एव ससर्जादौ तासु वीर्यमवासृजत्[1] ।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥

इत्यद्भ्यो ऽण्डमुत्पन्नमिति भगवता मनुनोक्तम्, तदप्युपलक्षणम्. पूर्वं भूतान्तरसंसृष्टादन्तर्गतपृथिवीभागाज्जलादण्डमुत्पन्नं तत्रैव तिष्ठतीति भावः ।

एवमण्डसृष्टिक्रममुक्त्वा तेषां बाह्यभूतानामान्तराकाशादिरूपेण परिणामानन्तरं त्रैलोक्यविभागं कर्तुं तत्र लोकेषु देवादिजीवविभागं च कर्तुमेतस्याण्डस्यान्तर्बद्धात्मसमष्टिरूपस्य ब्राह्मणः सृष्टिमाह

**तत्र चतुर्मुखं सृजति, अण्डमण्डकारणानि च स्वयमेव सृजति, अण्डान्तर्गतवस्तूनि चेतनान्तर्यामी सन् सृजति ।**

तत्रेत्यादिना. चतुर्मुखस्य बद्धात्मसमष्टित्वं नामैतस्मिन्नण्डे ऽपेक्षितानां कर्मवश्यचेतनानामेतच्छरीरादुत्पत्तिः. एवं चतुर्मुखसृष्टिः. अनन्तरसृष्टीः सर्वाः सद्वारिकाः कर्तुं किल तदेव दर्शयितुं समष्टिसृष्टौ व्यष्टिसृष्टौ च सर्वेश्वरेण क्रियमाणं क्रममाह अण्डमित्यादिना. महदादिसमुदायकार्यमण्डम्, तत्कारणानि महादादिपदार्थांश्च सत्यसङ्कल्पस्य स्वस्याव्यवहितसङ्कल्पेन सृजतीत्यर्थः ॥

सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमवासृजत्[1] ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।

इत्यादि.

चतुर्मुखादिचेतनानां हृदये स्थित्वा "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनश्चेति संकल्पज्ञानादीनुत्पादयाण्डान्तर्वर्तिनः सकलपदार्थान् सृजतीत्यर्थः.

यत्किञ्चित्सृज्यते येन सत्वजातेन वै द्विज ।
तस्य सृज्यस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः ॥

(१) वीजमपासृजादीति पाठान्तरम् ।

इतीश्वरः सकलकर्तृशरीरकः सकलकार्याणि सृजतीत्युक्तम्, एतावता ईश्वर एतत्सर्वम्मेलयित्वा तैरेकमण्डं सृजतीति सर्वेश्वरो महदादिपदार्थैर्म्मिश्रितैरण्डसृष्टिं करोतीत्येतावदुक्तम्।

अथाण्डबहुत्वं तस्य क्रमं तच्च सर्वेश्वरस्येष्टविनियोगार्हमित्यादि तस्य परिणाम[1] प्रकारश्चाह

**अण्डानि चानेकानि चतुर्द्दशलोकयुक्तान्युत्तरोत्तरं दशगुणैरावरणैः सप्तभिरावृतानीश्वरस्य क्रीडाकन्दुकस्थानीयानि जलबुद्बुदवदेककाले सृष्टानि।**

अण्डानि चेत्यादि. अण्डानि चानेकानीति,

> अण्डानान्तु सहस्राणां सहस्राण्ययुतानि च।
> इदृशानां तथा तत्र कोटिकोटिशतानि च॥

इत्यादि।

चतुर्द्दशलोकयुक्तानीति, चतुर्द्दशलोकाश्चाऽप्यऽण्ड[2]कपालस्योपरि अशीतिलक्षयोजनोच्छ्रायवन्तः

गर्तोदकस्योपरि

> सप्ततिस्तु सहस्राणि द्विजोच्छ्रायो ऽपि कथ्यते।
> दशसाहस्रमेकैकं पातालम्मुनिसत्तम॥
> अतलं वितलं चैव नितलं च गभस्तिमत्।
> महाँश्च सुतलं चाग्रयं[3] पातालं चैव सप्तमः॥

इत्युक्तप्रकारेण प्रत्येकं दशसहस्रयोजनोच्छ्रायवन्तो दैत्यदानवपन्नगसुपर्णादिनिवासदेशाः

---

(१) इत्यर्थः॥ तस्यपरिणामेति पुस्तकस्थः पाठः।

(२) लोकांश्चाथोऽण्डेति पु० पा०।

(३) चाग्रयां—इति पु० पा०।

शुक्लकृष्णारुणाः पीताः शर्कराः शैलकाञ्चनाः ।
भूमयो यत्र मैत्रेय वरप्रासाद[1] शोभिताः ॥

इत्युक्तप्रकारेण शुक्लकृष्णाऽरुणपीतवालुकामयाः शैलकाञ्चनमयस्थलविशेषयुक्ता विलक्षणसौधालङ्कृताः स्वर्गादिभ्योऽपि निरतिशयभोग्याः "अतलं वितलं गभस्तिम" दित्यभिधीयमानास्तलातलमहातलसुतलपातालाभिधाधोलोकाः सप्त, तदुपरि नवसहस्रयोजनविशालस्सप्तद्वीपपर्वतसागरविशिष्टः पादचारिभिर्म्मनुष्यादिभिर्व्यवस्थितः[2] पद्माकारो भूलोकः, भूलोकस्योपर्यादित्यस्याधस्ताल्लक्षयोजनोच्छ्रायो गन्धर्वादिभिरधिष्ठितो देशो भुवर्लोकः, आदित्यस्योपरि ध्रुवस्याधस्ताच्चतुर्दशलक्षयोजनोच्छ्रायः साधिकारैर्ग्रहनक्षत्रादिभिरधिष्ठितो देशस्स्वर्लोकः, ध्रुवस्योपरिकोटियोजनोच्छ्रायो "विनिवृत्ताधिकारास्तु महर्लोकनिवासिन" इत्युक्तप्रकारेण निवृत्ताधिकारैरधिकारापेक्षावद्भिरिन्द्रादिभिरधिष्ठितो देशो महर्लोकः, तदुपरि कोटिद्वययोजनोच्छ्रायो ब्रह्मपुत्रैः सनकादिभिः परमयोगिभिरधिष्ठितो देशो जनलोकः, तदुपर्यऽष्टकोटियोजनोच्छ्रायो वैराजाख्यैः प्रजापतिभिरधिष्ठितो देशस्तपोलोकः, तपोलोकोपर्यऽष्टचत्वारिंशत्कोटियोजनोच्छ्रायः

तेषामेषां केचन ब्रह्मलोका
रुद्रस्यान्ये सन्ति तत्रैव लोकाः ।
विष्णोरन्ये सन्ति लोका विशाला-
स्तांस्ताँल्लोकांस्तानुपास्य व्रजन्ति ॥

इत्युक्तप्रकारेण ब्रह्मविष्णुशिवानुपास्य प्राप्तैरधिष्ठितो देशस्सत्यलोकः एवमूर्द्ध्वाधःकटाहयोरन्तराऽष्टषष्टिकोटियोजनोच्छ्रायः पञ्चाशत्कोटियोजनोण्डोच्छ्राय इत्यपि वदन्ति ।

तत्र "सूर्य्याण्डगोलयोर्म्मध्ये कोट्यः स्युः पञ्चविंशति" रितिशुकवचनप्रकारेण सूर्यस्योपरि पञ्चविंशतिकोटियोजनान्यधस्तात्पञ्चविंशतिकोटियोजनानि च भवन्ति.एवम्भूतैश्चतुर्दशभिर्भुवनैर्यु-

(१) प्रसादेति पु० पा० ।

(२) व्यवसित इति पु. पा. । वस्तुतस्तु, अधिष्ठित'इत्येव पाठो ऽपभ्रष्टो जातः ।

कानि उत्तरोत्तरं दशगुणैरावरणैस्सप्तभिरावृतानीति. पूर्वोक्तांश्चतुर्दशलोकांश्च

एतदण्डकटाहेन तिरश्चोर्ध्वमधस्तथा ।
कपित्थस्य यथा बीजं सर्वतो वै समावृतम् ॥

इत्युक्तप्रकारेणान्तःकपित्थबीजादीनि कपित्थत्वग्यथा सर्वत आवृणोति, तथा "कोटियोजनमानस्तु कटाहः संव्यवस्थित इति कोटियोजनप्रमाणवत्तया शैवोक्ताण्डकटाह आवृणोति, साण्डकटाहश्चेदमण्डं "दशोत्तरेण पयसा मैत्रेयाण्डं च तदावृतमित्युक्तप्रकारेण स्वस्माद्दशगुणविस्तारयुक्तेन जलतत्वेनावृतं भवति.

पञ्चाशत्कोटिविस्तीर्णा सेयमुर्वी महामुने ।
सहैवाण्डकटाहेन सद्वीपाब्धिमहीधरा ॥

इति साण्डकटाहमण्डं पञ्चाशत्कोटिविस्तीर्णमित्याहुः। भूमण्डलन्तु शतकोटिविस्तारं साण्डकटाहमितिवराहपुराणोक्तत्वात्. एवं स्कन्दपुराणे शिवरहस्ये विस्तरेणोक्तत्वाच्च मेरं परितः[1] पञ्चाशत्कोटिविस्तारं स्वीकृत्य भूमिं शतकोटिविस्तारामाहुः. अत्र यां काञ्चन मर्य्यादामालम्ब्य ततो दशगुणेन जलतत्त्वेनावृतमिति केचिदाहुः ।

एवं दशोत्तरं तेजस्तत्त्वं जलतत्वमावृणोति, तथाविधं वायुतत्त्वमावृणोति, वायुमाकाशमावृणोति, आकाशमहङ्कार आवृणोति, अहङ्कारम्महत्तत्त्वमावृणोति, तच्च महत्तत्त्वमव्यक्तमावृणोति. ननु तदनन्तरमसंख्यातप्रमाणमिति अपरिमितप्रमाणस्याव्यक्तस्यावरणत्वप्रयुक्तं दशोत्तरत्वमनुपपन्नमिति चेन्न, सहस्रे दशवद ऽपरिमितसंख्यायां तस्यापि सत्त्वेनोपपत्तेः.

वारिवन्ह्यनिलाकाशैस्ततो भूतादिना बहिः ।
वृतं दशगुणैरण्डम्भूतादिर्म्महता तथा ॥
अव्यक्तेनावृतो ब्रह्मन् तैः सर्वैस्सहितो महान् ।
एभिरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ॥

इत्युक्तप्रकारेण दशोत्तरैः सप्तावरणैरावृतानीत्यर्थः.

(१) मेरोः परित इति पु. पा. ।

ईश्वरस्य क्रीडाकन्दुकस्थानीयानीति, क्रीडापरस्य बालस्य क्रीडनकानीव लीलारसमनुबुभूषो[1] रीश्वरस्य लीलोपकरणानीत्यर्थः. "हरे विहरसि क्रीडां कन्दुकै[2] रिव जन्तुभि" रिति "मोदते भगवान् भूतैर्बालः क्रीडनकैरिवे" ति चोक्तप्रकारेणेश्वरविभूतिः सर्वा लीलोपकरणं खलु ।

जलबुद्बुदवदेककाले सृष्टानीति, ईश्वरेणाण्डसृष्टिसमये क्रमेणैकैकपरिणामं विना "न क्रमेण विवृद्धं तज्जलबुद्बुदवत्सम"मित्युक्तप्रकारेण जलबुद्बुदवदेकस्मिन्नेव काले उत्पन्नानीत्यर्थः. अनेकानि जलबुद्बुदानि यथैककाले उत्पद्यन्ते, तथैककालेन सृज्यन्त इत्युक्तप्रकारेण सकलान्यण्डान्येककाल उत्पद्यन्त इति भावः. एवमण्डानामानन्त्यम्मिथस्तुल्यत्वञ्चोक्तम् ॥

अथ पञ्चानाम्भूतानाम्प्रत्येकं विनियोगं दर्शयति

**भूतेष्वाकाशो ऽवकाशहेतुः, वायुर्वहनादिहेतुः, तेजः पचनादिहेतुः, जलं सेचनापिण्डीकरणादिहेतुः, पृथिवी धारणादिहेतुरिति वदन्ति ।**

भूतेष्वित्यादिना. सकलपदार्थानां स्थितिगमनाद्यर्थमवकाशप्रदाने ऽकाशस्य[3] विनियोगः.

अस्य देहस्य वियतो लाघवं सौक्ष्म्यमेव च ।
शब्दःश्रोत्रं बलं ब्रह्मन् सुषिरत्वं विविक्तता ॥

इत्यऽनेकविनियोगसत्त्वेपि अस्यैकस्याभिधानमेतत्प्राधान्यद्योतनार्थम्.

इदमन्येषामुपलक्षणम् ।

वायुरिति, वहनादीत्यत्रादिपदेन व्यूहनचेष्टादयो गृह्यन्ते. इदञ्च

वायोः स्पर्शेन्द्रियं चैव कार्कश्यं स्पर्शमेव च ।
व्यूहनं वहनं देहः स्वीकरोति सवुत्तमे"त्युक्तम्.

---

(१) लीलारसानुबुभूषोरिति पु. पा. ।

(२) कन्तुकैरिति पाठोऽत्र प्रतीके पुस्तकेऽस्मिन् पूर्वमागतः ।

(३) प्रदानामाकाशस्येति पु० पा० ।

तेज इति, पचनं पाकः ।
आदिशब्देनौष्ण्यप्रकाशादय उच्यन्ते. इदञ्च

अग्नेरौष्ण्यं प्रकाशत्वं रूपेन्द्रियममर्षणम् ।
सन्तापशौर्य्यतैक्ष्ण्यानि वर्णं पचनशक्तिताम् ॥
आदत्ते सहसा देहः साहसञ्च द्विजर्षभ ।

इति कथितम् ।

जलमिति, सेचनपिण्डीकरणादीत्यादिना शैत्यमार्द्दवादय उच्यन्ते. इदञ्च

अद्भ्यः शैत्यं समादत्ते स्निग्धत्वं रसनेन्द्रियम् ।
प्रसादं मार्द्दवं पिण्डीकरणं क्लेदनं च वै ॥

पृथिवीति, धारणादीत्यादिपदेन मूर्त्तिमत्त्वगुरुत्वादय उच्यन्ते

भूमेर्गन्धगुणं घ्राणं गरिमाणन्तु धारणम् ।
मूर्त्तिमत्त्वं सहिष्णुत्वं स्वीकरोति यथातथम् ॥

इतीदमपि व्याहृतम्.
वदन्तीति, 'तत्त्वविद' इत्याऽऽदिः ॥
अथैकादशेन्द्रियाणामपि वृत्तिभेदमाह

**श्रोत्रादिज्ञानेन्द्रियाणाम्पञ्चानां शब्दादिविषयपञ्चकग्रहणं कृत्यम्, वागादिकर्म्मेन्द्रियाणाम्पञ्चानां विसर्गशिल्पगत्युक्तयः कृत्यम्म्, मन एतषां सर्वेषां समानम्म् ।**

श्रोत्रादीत्यादिना. श्रोत्रस्य शब्दग्रहणं, त्वगिन्द्रियस्य स्पर्शग्रहणं, चक्षुषो रूपग्रहणं, घ्राणस्य गन्धग्रहणञ्च कृत्यमित्यर्थः.

त्वक्चक्षुर्न्नासिका जिह्वा श्रोत्रमत्र तु पञ्चमम् ।
शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वै द्विज ॥ इति

अत्र श्लोके इन्द्रियाणां व्युत्क्रमेणोपादानात्तत्तदिन्द्रियविषयो न्यायेनैव निश्चेयः,[1] ज्ञानेन्द्रियाणां शब्दादिग्रहणं कृत्यमित्येतत्पदे-

(१) निश्चय इति पु. पा. ।

वोच्यते. वागादीति, विसर्गेति व्युत्क्रमेणाभिधानं वाक्यस्वारस्या-य. अनेन वाच उक्तिः, पाणेः, शिल्प, म्पादस्य गति, रुपस्थपाय्वो[1]-र्जलमलविसर्गश्च कृत्यमित्युक्तम् .

पायूपस्थौ करौ पादौ वाक् च मैत्रेय पञ्चमी ।
विसर्गशिल्पगत्युक्ति कर्म्म तेषाञ्च कथ्यते ॥

इत्यादि. मन इत्यादि, ज्ञानेन्द्रियाणां स्वस्वविषयग्रहणसमये कर्म्मेन्द्रियाणां स्वस्वकर्म्मकरणसमये, मनःसहकारस्यापेक्षितत्वादुभयात्मकम्मन एतेषां सर्वेषां साधारणमित्यर्थः ।

ज्ञानेन्द्रियाणां विषयतयाऽभिहिताः शब्दादयः पञ्चानामाकाशादिभूतानाम्प्रतिनियतगुणा इत्याह

## आकाशादिभूतानां शब्दादयो गुणाः.

आकाशादीत्यादिना. आकाशगुणः शब्दः, वायुगुणः स्पर्श, अग्निगुणो रूपं, जलगुणो रसः, भूमिगुणो गन्ध इत्यर्थः ।

एवं प्रतिनियतगुणानां भूतानां गुणविनिमये हेतुमाह

## गुणविनिमयः पञ्चीकरणेन.

गुणविनिमय इत्यादिना. गुणविनिमयः एकस्मिन्भूते भूतान्तरगुणानां प्रतीतिर्य्यथा जायते, तथा भूतेषु गुणानां समावेशः. श्रुतप्रकाशिकाकारैः शुकपक्षीये"तेजोवारिमृदां यथा विनिमय इत्यस्य"विनिमयः परस्परसम्मिश्रीकरणमित्युक्तम्. अत्रापि परस्परसम्मिश्रीकरणमेव विनिमयशब्दार्थः. तत्र भूतानामन्योऽन्यसम्मिश्रीकरणमुक्तम्. अत्र गुणानामन्योऽन्यं सम्मिश्रीकरणं नाम न भूतस्य भूतान्तरेण मिश्रीकरणवत् गुणस्य गुणान्तरेण मिश्रीकरणम्, किन्त्वेकगुणस्यान्यत्र गमनेन सर्व्वगुणानां सर्वत्र समावेशः. अथवा, विनिमयो नामैकस्य दानेनान्यस्यादानम्. स्वगुणं भूतान्तरस्य दत्त्वा तद्गुणस्य स्वेन भजनमिति. अनेन स्वगुणस्यान्यत्रावस्थानमन्यगुणस्य स्वस्मिन्नवस्थानं चोक्तम् . गुणविनिमयः पञ्चीकरणेनेत्यस्या-

(१) उपस्थपायोरिति पु. पा. ।

यमाशयः गुणत्वेनाश्रयादन्यत्र वृत्तेरभावाद् द्रव्यस्य सम्मिश्रीकरणमेव गुणमिश्रीकरणहेतुरिति. पञ्चीकरणं नाम

एवं जातेषु भूतानि प्रत्येकन्तु द्विधा ततः।
चतुर्द्धा भिन्नमेकैकमर्द्धमर्द्धन्तथा स्थितम्॥
व्योम्नोर्द्धभागाश्चत्वारो वायुतेजःपयोभुवाम्।
अर्द्धानि यानि वायोस्तु व्योमतेजःपयोभुवाम्॥

इत्यादिपुराणवचनोक्तप्रकारेणाकाशादिभूतानि पञ्च[1] प्रत्येकं द्विधा कृत्वा तत्रैकं चतुर्द्धा कृत्वा तान् भागान् भूतान्तरेषु चतुर्थविभक्तार्द्धेषु मेलयित्वा सर्वभूतेषु सर्वेषां मेलनकरणम्. एवम्पञ्चीकृतानामप्यविभक्तार्द्धप्राधान्यान्तकाशादिव्यपदेशाविरोधः.

## आकाशे नैल्यप्रतीतिरपि तेनैव.

आकाश इत्यादि. अतिसूक्ष्मतया चक्षुरऽविषयस्याकाशस्य चक्षुर्विषयत्वञ्च "यत्कृष्णन्तत्पृथिवीति पृथिवीरूपत्वेनाभिहितकृष्णत्वप्रयुक्तं पञ्चीकरणेनेत्यर्थः. अनेन त्रिवृत्करणाभिधानानन्तरं श्रुतिरेव "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येत्यग्नौ निरूपत्वं यथाऽदर्शयत्, तथायमपि पञ्चीकरणाभिधानानन्तरं तत्तेभ्यः सर्व्वेभ्यो ऽतिसूक्ष्म आकाशे भूते ऽदर्शयत. एवं श्रीभाष्ये

यदग्ने रोहितं रूपं तेजसस्तदपामपि।
रूपं शुक्लं पृथिव्याश्चेत्यग्नेरेव त्रिरूपता॥
श्रुत्यैव दर्शिता, तस्मात्सर्व्वे सर्वत्र सङ्गताः।

इति भाष्यकारैरुक्तम्.

ननु च्छान्दोग्ये पञ्चीकरणमनुक्त्वा त्रिवृत्करणं किमित्युक्तमिति चेन्न, तत्र तेजोवन्नानां त्रयाणामुत्पत्तिक्रम एवोक्तः, श्रुत्यन्तरोक्ता आकाशवाय्वोः[2] अव्यक्तमहदहङ्कारादीनां चोत्पत्तिर्नोक्ता, तत्र तेजोबऽन्नकथनं यथा तत्त्वान्तराणामुपलक्षणम्, तथा त्रिवृत्करणकथनं पञ्चीकरणस्योपलक्षणम् एवम्पञ्चीकरणेन सर्वेषां भूतानां परस्परं

(१) पञ्च चेति पु. पा.।
(२) आकाशवायोरिति पु० पा०।

मिश्रितत्वाच्छब्दादिगुणपञ्चकमपि सर्वेषु भूतेषु विद्यत इति गुणविनिमयहेतुरुक्तः ।

अथाकाशादिषु पूर्वपूर्वापेक्षयोत्तरोत्तरतत्वानां गुणाधिक्यस्य मूलमाह

**पूर्वपूर्वतन्मात्रसहितैरेवोत्तरोत्तरतन्मात्रैः स्वस्वगुणोत्पादनाद्[1]गुणाधिक्यं जायत इत्यपि वदन्ति ।**

पूर्वपूर्वेत्यादिना.

शब्दतन्मात्रेणावृतं स्पर्शतन्मात्रं स्व[वि]शेषं वायुमुत्पादयत्यऽतो वायोः शब्दस्पर्शौ गुणौ. एवं शब्दतन्मात्रेणावृतेन स्पर्शतन्मात्रेणावृतेन रूपतन्मात्रेणोभाभ्यां युक्तेन स्वविशेषस्य तेजस उत्पादनात् तस्य शब्दस्पर्शरूपाणि गुणाः. एवम्पूर्वतन्मात्रद्वयविशिष्टरूपतन्मात्रावृतेन तैस्त्रिभिर्युक्तेन रसतन्मात्रेण स्वविशेषस्य जलस्योत्पादनात् तस्य शब्दस्पर्शरूपरसाश्चत्वारो गुणाः . पूर्वपूर्वतन्मात्रत्रयविशिष्टेन रसतन्मात्रेणावृतेन गन्धतन्मात्रेण स्वविशेषस्य पृथिव्या उत्पादनात् तस्याः शब्दादिपञ्चगुणा भवन्तीत्यर्थः .

अनेनैकैकगुणाश्रयाणामाकाशादिभूतानां यथा गुणविनिमयः पञ्चीकरणप्रयुक्त, स्तथोत्तरोत्तरभूतेषु गुणाधिक्यं स्वस्वतन्मात्रस्य विद्यमानावरणप्रयुक्तमित्युक्त 'मित्यपि वदन्तीत्यपिना' समुच्चिनोति. वदन्तीत्यस्य तत्त्वविद इत्यादिः .

आकाशं शब्दमात्रन्तु स्पर्शमात्रं समाविशत् ।
रूपं तथैवाविशतः शब्दस्पर्शगुणावुभौ ॥
शब्दः स्पर्शञ्च रूपं च रसमात्रं समाविशत् ।
तस्माच्चतुर्गुणा ह्यापो विशेषाश्चेन्द्रियग्रहाः ॥

इत्यादि. उद्देशक्रमेण शुद्धसत्त्वमिश्रसत्त्वयोः स्वरूपादिकं विशदमुक्तवान् ॥ * ॥

अथ सत्त्वशून्यङ्किमित्याकाङ्क्षायामाह

---

१ स्वविशेषोत्पादनादिति पु. पा. ।

**सत्त्वशून्यङ्कालः. अयञ्च प्रकृतिप्राकृतानाम्प-रिणामहेतुः कलाकाष्ठादिरूपेण परिणतो नित्य ईश्वरस्य क्रीडापरिकरः शरीरञ्च ।**

सत्वशून्यमित्यादि. सत्त्वगुणो रजस्तमसोरुपलक्षणम्. तथा च सत्त्वशून्यमिति, सत्त्वादिगुणत्रयशून्यमित्यर्थः. अनेन केवलसत्त्वाद्गुणत्रयाश्रयादचिद्द्वयादिदं व्यावृत्तस्वरूप[1]मित्युक्तम्. अस्य प्रकाराः के इत्याकाङ्क्षायामाह अयञ्चेति. प्रकृतिप्राकृतानां परिणामहेतुरिति, प्रकृतिरव्यक्तम्, प्राकृतानि व्यक्तानि. कालस्यैतत्प्रकृतिप्राकृतानां परिणामहेतुत्वमेतान्, स्वसङ्कल्पादिना परिणमयता[2]सर्वेश्वरेण कालस्यावस्थाविशेषानपेक्ष्य तत्तत्काल आगतैतन्निर्वहणात्, एतेषाम्परिणामे कालस्यावस्थापेक्षितत्वात् ।

> प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।
> क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥
> काले संसृति योग्यतां चिदचितोरन्योऽन्यमालिङ्गतो
> भूताहङ्कृतिबुद्धिपञ्चकरणीस्वान्तप्रवृत्तीन्द्रियैः ।

अण्डानावरणैः सहस्रमकरोदित्युक्तप्रकारेण जगत्सृष्टिकरणसमये तत्कालागमनं प्रतीक्ष्य सृजति खलु. इदं स्थित्यादेरपि तुल्यम्.एवङ्कालप्राधान्येन सर्वेश्वरेण सृष्ट्यादिसकलव्यापारकरणादत्र विभूतौ सर्वे पदार्थाः कालकृतपरिणामा भवन्ति. एतेषाम्परिणामानां कालस्य हेतुत्वमेतदन्वयव्यतिरेकाभ्यां लौकिकपदार्थेषु द्रष्टव्यम्.तस्मात्कालस्य प्रकृतिप्राकृतपरिणामहेतुत्वमागमप्रत्यक्षाभ्यां सिद्धम् ।

अथपूर्वोक्तोपयोगितत्परिणामविशेष उच्यते. कलाकाष्ठादिरूपेण परिणत इति,

---

(१) व्यावृत्तं स्वरूपमिति पु. पा. ।
(२) परिणामयतेति पु. पा. ।

काष्ठा पञ्चदशाख्याता निमेषा मुनिसत्तम, ।
काष्ठात्रिंशत् कला, त्रिंशत्कला मौहूर्त्तिकोऽ वधिः,[1] ॥
तावत्संख्यैरहोरात्रं मुहूर्त्तैर्म्मानुषं स्मृतम्, ।
अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः, ॥
तैः षड्भिरयनं, वर्षं द्वे ऽयने दक्षिणोत्तरे, ।
अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिवा, ।
दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् ।
चतुर्य्युगं, द्वादशभिस्तद्विभागं निबोध मे ॥
चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्, ।
दिव्याब्दानां सहस्राणि युगेष्वाहुः पुराविदः, ॥
तत्प्रमाणैः शतैस्संध्या पूर्वा तत्र विधीयते, ।
संध्यांशकस्तत्तुल्यो युगस्यानन्तरो हि सः, ॥
सन्ध्यासन्ध्यांशयोरन्तर्यः कालो मुनिसत्तम ॥
युगाख्यस्स च विज्ञेयः कृतत्रेतादिसंज्ञितः ॥

इत्यारभ्य

एवन्तु ब्रह्मणो वर्षमेवं वर्षशतन्तु तत् ।
शतं हि तस्य वर्षाणां परमायुर्म्महात्मनः ॥

इत्यन्तेन कालस्य परिणामविशेषा भगवता श्रीपराशरेण कथिताः. अमुमर्थं मध्यवीथीभट्टार्य्यैः पञ्चदश निमेषाः काष्ठा, त्रिंशत्काष्ठाः कला, त्रिंशत्कला मुहूर्तं, मुहूर्त्तानि त्रिंशद्दिवसः, त्रिंशद्दिवसाः पक्षद्वयरूपो मासः, द्वौ मासा वृतुः, त्रयो हि ऋतवो ऽयनम्, द्वे अयने संवत्सरः. एवं मानुषसंव्वत्सराः षष्ट्यधिकत्रिशतसंख्याका एको देवसंवत्सरः, द्वादश सहस्राणि देवसंवत्सराश्चतुर्युगम्., तत्र कृतयुगं चत्वारि सहस्राणि, त्रेतायुगं त्रीणि सहस्राणि, द्वापरयुगं द्वे सहस्रे, कलियुगमेकं सहस्रम् . कृतयुगस्य पूर्वसन्ध्या चत्वारि शतानि, अपरसन्ध्या चत्वारि शतानि. त्रेतायुगस्य पूर्वसन्ध्या त्रीणि शतानि, अपरसन्ध्या त्रीणि शतानि. द्वापरस्य पूर्वसन्ध्या द्वे शते, अपरसन्ध्या द्वे शते. कलियुगस्य पूर्वसन्ध्या शतम्, अपरसन्ध्या शतम्. एवं किञ्चिदधिकान्येकसप्ततिचतुर्युगानि मन्वन्तरम्. एवं चतुर्दशमन्व-

(१) विधिरति पु. पा. ।

न्तराणि चतुर्युगसहस्रं ब्रह्मणो दिनम्[1] रात्रिरप्येतत्समानैव . एवम् होरात्रमाससंवत्सरक्रमण शतान्तपरिगणितसंवत्सरा ब्रह्मणआयु स्तस्यायुषः परमित्यपि नामे' ति सुव्यक्तमवोचत् . एवङ्कालस्य कलाकाष्ठादिपरिणामप्रकार उक्तः ।

नित्य इति, अत्र नित्यत्वम् " अनादिर्भगवान् कालो नान्तो ऽस्य द्विज विद्यत " इत्युक्तप्रकारेणाद्यन्तराहितत्वम् . ईश्वरस्य क्रीडापरिकर इति, निखिलजगदुदयविभवलयलीलस्य सर्वेश्वरस्य स लीलोपकरणमित्यर्थः , प्रकृतिपुरुषकालास्त्रयो ऽपि लीलोपकरणानि.[2] तत्र प्रकृतिपुरुषौ सृष्ट्यादीनां कर्म्मीभूय लीलोपकरणे भवतः अयं सहकारित्वेन लीलोपकरणं भवति. ईश्वरेण सृष्ट्यादिनिर्वाहसमये सत्यसङ्कल्पेन स्वेन कृतस्य कालनियमस्यानुसारेण तत्तत्कालागमनं प्रतीक्ष्य निर्वहणात् . अयञ्च निमेषकाष्ठादिरूपेण परिणामात् सृष्टिविषयो ऽपि भवति, तथाचैवं प्रकारेणेश्वरस्य क्रीडापरिकरो भवति. क्रीडापरिकरत्वाभिधानात् कालकृतपरिणामवत्तयाभिहितायां लीलाविभूतावस्य विनियोगः. " न कालस्तत्र वै प्रभुरित्युक्तायां भोगविभूतावेतदपेक्षा नास्तीत्युक्तम् .

अथैवम्भूतस्य कालतत्त्वस्येश्वरस्यापृथक्सिद्धविशेषणत्वमाह शरीरमिति .

परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज ।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परः ॥
प्रधानपुरुषव्यक्तकालास्तु[4] प्रविभागशः ।
रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः ॥

विष्णोः स्वरूपात्परतोदिते द्वे रूपे प्रधानं पुरुषश्च विप्र।
तस्यैव ते ऽन्येन मिथो वियुक्ते रूपान्तरं तद् द्विजकालसंज्ञम्॥

इत्यादि प्रमाणम् केन चिच्चेतनेन कस्यचिद्द्रव्यस्य विद्यमानः पृथक्सिद्ध्यनर्हाधाराधेयभावो नियन्तृनियाम्यभावः शेषशेषिभावश्च

(१) दिवेति पु. पा. । (२) तल्लीलेति पु. पा. ।
(३) उपकरणा इति पुंलिङ्गपाठः पुस्तके ऽस्ति ।
(४) कालस्तु–इति पु. पा. ।

प्रत्येकं शरीरलक्षणम्भवति. तथाच कालसंज्ञकाचिद्द्रव्यस्येश्वरेण सम्बन्धत्रयस्यापि सत्त्वादऽयं तस्य शरीरमिति भावः. एवम्प्रकृत्यादिसहकारिणः कालस्येश्वरशरीरत्वाभिधानात् सहकारिकारणं चेश्वर एवेत्युक्तेर्न विरोधः. एवं सत्त्वशून्यमयमिति तत्कार्य्यं तदुपयोगिपरिणामं तदनादिनिधनत्वं ईश्वरीयकार्यविशेषपरिकरत्वं तस्य तच्छरीरत्वञ्चोक्तम् ।

त्रिविधाचिन्निरूपणसमये तद्भोगोपकरणत्वरूपगौरवेण शुद्धसत्त्वंप्रथममवोचत्. अथ तस्य लीलायाः प्रधानोपकरणं प्रधानशब्दवाच्यं मिश्रसत्त्वमवदत्. अनन्तरं प्रधानपरिणामसहकारितया लीलोपकरणं सत्त्वशून्यमवदत् .

एवमचित्त्रयनिरूपणावसरे प्रकृतिप्राकृतानां परिणामहेतुरितिकालस्येव पूर्व्वाचिद्द्वयस्य विनियोगो नोक्तस्तमिदानीमाह

## अन्यौ द्वावचित्पदार्थावीश्वरस्यात्मनश्च भोग्यभोगोपकरणभोगस्थानानि भवन्ति.

अन्यौ द्वावित्यादिना. ईश्वरस्यात्मनश्चेति, चेतनाः खल्वचेतनस्य भोक्तारः. चेतना ईश्वर आत्मानश्च,तस्मादुभयोर्भोग्यादीनीति भावः. आत्मन इत्येकवचनं जात्यभिप्रायेण त्रिविधचेतनानपि वदति.एवमुभयोरचितोरुभयोर्भोग्यत्वे ऽपि केवलभगवदिच्छया तद्भोगार्थं परिणतत्वात् अनवरतापरोक्षितस्वपरस्वरूपेषु मुक्तेषु तन्मिथुनभोगैकान्तत्वं विना ऽहंममेति स्थितानामभावात् शुद्धसत्त्वस्य विनियोगे ईश्वरप्रधानः चेतनकर्म्मानुगुणभगवत्सङ्कल्पेन परिणतत्वाच्चेतनानां सर्वेषां देवादिशरीरेष्वहंबुद्ध्या स्वतन्त्रेभोक्तृतया स्थितत्वात्. ईश्वरस्यैतद्विभूतौ लीलारसस्यैव प्रचुरतया भोगरसस्याल्पत्वात् मिश्रसत्त्वस्यविनियोगो बद्धचेतनप्रधानः, तत्र विभूतौ भोग्यानि अप्राकृतशब्दादीनि भोगोपकरणानि दिव्यमाल्यादीनि च्छत्रचामरादीनि करणानि च भोगस्थानानि अप्राकृतरत्नमयमण्डपप्रासादा इत्यादीनि पञ्चोपनिषन्मया[1] दिव्यविग्रहाश्च .

( १ ) मण्डपः प्रासादा इत्यादीनि पञ्चोपनिषण्मया इति पु. पा. ।

एवं नित्यविभूतिप्रक्रियया अत्र वक्तव्यत्वेऽपि सङ्कोचेन लीलाविभूतिप्रक्रियामात्रमाह

## भोग्या विषयाः, भोगोपकरणानि चक्षुरादिकरणानि, भोगस्थानानि चतुर्दशभुवनानि समस्तदेहाश्च ।

भोग्या इत्यादिना. नन्विदमेवोभयविभूतेरपि भोग्यादीनामुपपादनं भवत्विति चेन्न, भोगोपकरणेषु प्रधानानामनुक्तेः भोगस्थानेषु वैषम्याच्च. अत्र चेतनानां भोगः सुखदुःखस्वरूपानुभवज्ञानम्. तादृशज्ञानविषयत्वाच्छब्दादयो विषया भोग्याः. तादृशज्ञानानां करणत्वादिन्द्रियाणि भोगोपकरणानि. यत्राधिकरणे तिष्ठतश्चेतनस्य तादृशज्ञानमुत्पद्यते तद्भोगस्थानशब्दस्यार्थः. तस्माद्भोगस्थानानीति लोका देहाश्चोच्यन्ते. लोकविभागाः प्रागुक्ताः।

समस्तदेहा इति, सुरनरतिर्यक्स्थावरात्मकशरीराणीत्यर्थः. ईश्वरस्यैतद्विभूतौ भोग्यभोगोपकरणादीनि चावतारकन्दे क्षीराब्धिशयने ऽवतारविशेषेष्व ऽर्चावतारेषु च विद्यमानैर्विनियोगविशेषैर्द्रष्टव्यानि.

अथ त्रिविधाचितां परिमाणान्याह

## अत्र पूर्वाचितो ऽधःसीमास्ति, ऊर्ध्वं परितश्च तन्नास्ति. मध्यमाचितः परितो ऽधश्च सीमा नास्ति, उपर्यस्ति. कालः सर्वत्राविशेषेण तिष्ठति.

अत्र पूर्वाऽचित इत्यादिना. पूर्वाचितो ऽधःसीमास्तीति, मिश्रसत्त्वावधित्वादिति भावः, मध्यमाचित उपर्यस्तीति, शुद्धसत्त्वावधित्वादितिभावः. कालस्य तादृशस्य कस्यचिदवच्छेदस्याभावात्सर्वत्राविशेषेण तिष्ठतीत्युक्तम्. एवं सार्वत्रिकः काल उभयविभूतावपि नित्य इति स्वस्याभिमतिः.

अस्य विभूतिभागमवलम्ब्य भेदं वदतां मतमाह

**कालश्च परमपदे नित्यो ऽत्रानित्य इति वदन्ति ।**

कालश्चेत्यादिना. एवमभिधानं परमपदे ऽस्योत्पत्त्यादिप्रतिपादकशास्त्राभावात्. एतद्विभूतावस्योत्पत्त्यादिकथनात् व्यूहकृत्यप्रतिपादनावसरे कालसृष्टिरनिरुद्धकृत्यत्वेनाभिहिता. प्रकृतेः सृष्टिर्य्यथामहदादिरूपेण परिणामः, तथा कालसृष्टिरपि निमेषादिरूपेण परिणामः सततपरिणामिन्याः प्रकृतेर्म्महदादिरूपस्थूलपरिणामवत्सततपरिणामिनो ऽस्यापि निमेषादिरूपः परिणामस्तादृशमहदादिवन्निमेषादिरूपस्याऽस्यापि उत्पत्तिविनाशवत्वादत्र कालो ऽनित्य इत्युच्यते. परमपदे ईदृशपरिणामविशेषप्रयुक्तोत्पत्त्यादिव्यवहाराभावान्नित्य इत्यच्युते.

एवं कालस्य परिणाममनङ्गीकृत्यैकरूपत्वमङ्गीकृत्यैवंभूतं कालतत्त्वं स्वस्य निमेषकाष्ठामुहूर्त्ताहोरात्रादिद्विपरार्द्धान्तविशेषव्यवहारस्य हेतुभूतैर्न्निमेषाऽऽदित्यगति[1] प्रभृत्यऽवच्छेदकैस्सम्बद्धम्भवति. तस्मात्क्षणलवादिभेदव्यवहारो भवतीति कश्चित्पक्षः. अयमेव पक्षस्तत्वत्रयविवरणे कृष्णपादैः प्राधान्येनाभिहितः, तत्र पक्षे विभूतिद्वयेपि कालस्वरूपस्यैकरूपत्वात्परमपदे नित्यो ऽत्रानित्य इति न वक्तुमुचितम्. तस्मादिदं परिणामपक्षमवलम्ब्य कैश्चिदुच्यत इति स्वीकार्य्यम्. अस्मद्दर्शने एवं कैश्चिदभिधानात्तद्दर्शितम्.

कालो नास्तीति बौद्धादिभिरभिधानात्तत्पक्षमुत्क्षिपति

**केचित्कालो नास्तीत्याहुः, प्रत्यक्षेणागमेन च सिद्धत्वात्तथा वक्तुं न शक्यते ।**

[ केचित् ] काल इत्यादिना. तन्निराकरोति प्रत्यक्षेणेत्यादिना. प्रत्यक्षं स्थावरजङ्गमात्मकसमस्तपदार्थानां कालकृतपरिणामत्वेन दर्शनम्, आगमः श्रुत्यादयः.

---

( १ ) पुस्तके तु—निमेषादित्यगतीत्यत्र ' निमषा ' —इति पुनस्त्रुटिमुद्रया पूरयित्वा ' निमेषानिमेषादित्यगती ' ति पाठ उपकल्पित,स्तत्रार्थः सुधीभिर्विभावनीयः ।

कला मुहूर्त्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ।

मधुश्च माधवश्च वासन्तिक ऋतू शुक्रश्च शुचिश्च ग्रीष्मा ऋ इति कालपरिणामविशेषाः कलाकाष्ठामुहूर्त्ताहोरात्रा ऋतुविशेषाः श्रुत्योक्ताः. "कालस्वरूपं विष्णोश्च यन्मयोक्तं तवानघ" त्यादि श्रीविष्णुपुराणे ऽयं विस्तरेणाभिहितः. एवं पुराणान्तरेषु इतिहासा दिषु च द्रष्टव्यम्. एतदर्थमेव निर्म्मितमध्ययनादिकालनियमप्रतिपा दकं ज्योतिश्शास्त्रं वेदस्य दृष्टित्वेनाभिधीयते. तस्मिञ्छास्त्रे ऽस्मि न्काले इदम्भवतीत्युक्तं च, तत्प्रत्यक्षेण दृश्यते.तस्मात्प्रत्यक्षेणागमेन च सिद्धत्वात्कालाभावो न वक्तुं शक्यत इत्यर्थः ।

वैशेषिकादिभिः पृथिव्यादिवद्दिशः पृथग्द्रव्यत्वाभिधानात् बहवो द्रव्यमिति पृथग् द्रव्यमस्तीति वदन्तीत्याह

**बहवो दिगिति विलक्षणमेकं द्रव्यमस्तीति वदन्ति, अनेकहेतुभिराकाशादावन्तर्भावसंभवा त्तदपि न युक्तम्म् ।**

बहव इत्यादिना. द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदि गात्ममनांसि नवैवेति ते वदन्ति.

> भूरापो ज्योतिरनिलो नभः कालस्तथा दिशः ।
> आत्मा मन इति प्राहुर्द्रव्याणि नव तद्विदः ॥

इत्याह वैराजः.

तं निराकरोति अनेकहेतुभिरित्यादिना. चतुर्षु पुरुषेषु चतुर्दिक्षु स्थितेषु तेषाम्मध्यप्रदेश एकस्य पूर्व एकस्य पश्चिम एकस्योत्तर एकस्य दक्षिण इति भवति,तन्मूलं द्रव्यं विना प्रतियोग्यनुगुणं काल्पनिकं चतुर्णां मध्ये विद्यमानाः पृथिव्यादयो द्रव्यत्वादेवं विप्रतिपत्तिविषया न भवन्ति.अथादित्यस्योदयप्रदेशः पूर्वदिक्, अस्तमन प्रदेशः पश्चिमेति स्वीक्रियते. स च महामेरुः परितो[१] भिन्नो भवति.

(१) महामेरोः परित इति पु. पा. ।

अत एव हि चतुर्षु पार्श्वेषु तिष्ठतां महामेरुरुत्तर एव भवति.

नैवास्तमनमर्कस्य नोदयः सर्वदा सतः ।
उदयास्तमनाख्यं हि दर्शनादर्शनं रवेः ॥
सर्वेषां द्वीपवर्षाणां मेरुरुत्तरतः स्थितः ॥

इति श्रीविष्णुपुराणे ऽभिहितम्. एवम्भूतानेकहेतुभिराकाशादिष्वन्तर्भावस्य वक्तुं शक्यत्वात् पृथग्व्यवस्थाभावात् दिक् पृथग्द्रव्यमिति न युक्तमित्यर्थः. आकाशादीत्यादिपदेन भूमिरुच्यते. तत्र दिशो ऽन्तर्भूतत्वात्सूर्यस्योदयाद्यनुगुणमेतेषु दिग्विभागः कल्पनीयः, पृथग्वस्तु नास्तीति भावः. तदपि न युक्तमित्यपिकारः[1] पूर्वं निराकृतपक्षसमुच्चायकः.

पृथिव्यादिचतुष्टयवदाकाशस्य भावरूपत्वमनङ्गीकृत्या 'वरणाभाव आकाश' इति वदतां बौद्धानां [ मतं ] निराकरोति

## केचिदावरणाभाव आकाश इति वदन्ति, भावत्वेन भानात्तदपि न युक्तम् ।

केचिदित्यादिना. आव्रियते ऽनेनेति करणव्युत्पत्त्या स्थूलपदार्था आवरणा इत्युच्यन्ते, तेषाम्पृथिव्यादीनामभाव आकाशशब्दवाच्यः न तु कश्चिदाकाश इति दर्शनयोग्यः पदार्थ इत्यर्थः.

'न च पृथिव्याद्यभावमात्रमाकाश इति वक्तुं शक्य'मिति भाष्यकारः. तन्निराकरोति भावत्वेनेत्यादिना. भावरूपत्वेनाङ्गीकृतपृथिव्यादिवदत्र श्येनः पतति अत्र गृध्रः पततीति श्येनादिपतनदेशतया ऽऽकाशस्यापि भावरूपत्वेन भानाद्वा ऽऽवरणाभावरूपत्वाभिधानं न युक्तमित्यर्थः. अत्राप्यपिकारो निषिद्धसमुच्चायकः. अयमर्थः, "आकाशे चाविशेषा"दिति सूत्रे आकाशे च निरुपाख्यता न युक्ता, भावरूपत्वेनाभ्युपगतपृथिव्यादिवदाकाशस्यापि अबाधितप्रतीतिसिद्धत्वाविशेषात्. प्रतीयते ह्याकाशो ऽत्र श्येनः पतत्यत्र गृध्र इति श्येनादिपतनदेशत्वेनेत्यादिना भाष्यकारैर्विस्तरेणोक्तः ।

---

( १ ) अपि पूर्वमित्यादिः पु. पा. ।

अथाकाशस्य नित्यनिरवयवत्वविभुत्वादिकं वदतां नैयायिकवैशेषिकाणां मतमाह

**परे केचिदमुन्नित्यं निरवयवं विभुमप्रत्यक्षमाहुः, भूतादेरुत्पत्तेरहङ्कारादावभावाच्छब्दस्पर्शादिमत्त्वाच्चक्षुर्विषयत्वाच्चैतच्चतुष्टयमप्ययुक्तम्।**

पर इत्यादिना. तन्मतन्निराकरोति भूतादेरित्यादिना. भूतादिसंज्ञकात्तामसाहङ्कारादुत्पन्नत्वात्कुतश्चिदुत्पन्नस्य सावयवस्य सिद्धेर्नित्यत्वनिरवयत्वे न युक्ते, भूतादेरुत्पत्तिकथनं शब्दतन्मात्रस्य स्थूलावस्थारूपतया तयोर्विद्यमानमैक्यमवलम्ब्य. अथ विभुश्चेत्सर्वगतः स्यात् स्वकारणाहङ्कारादिष्वस्य व्याप्त्यभावात्, तदप्ययुक्तम्. पञ्चीकरणप्रयुक्तरूपवत्त्वेन चक्षुर्विषयत्वादप्रत्यक्षत्वञ्च युक्तम्. आकाशस्य नैल्येन भानमपि तेनैवेति प्रागुक्तम्. अण्डान्तर्वर्तिनश्चाकाशस्य त्रिवृत्करणोपदेशप्रदर्शितपञ्चीकरणेन रूपवत्त्वाच्चाक्षुषत्वे उक्तविरोध इति भाष्यकारैरुक्तम्.

वायुरपि न प्रत्यक्षो ऽपि तु स्पर्शानुमेय इति तन्मतम्, तदपि निराकरोति.

**त्वगिन्द्रियेण ग्रहणा 'द्वायुरप्रत्यक्ष' इत्यप्ययुक्तम् ।**

त्वगिन्द्रियेणेत्यादिना. ज्ञानेन्द्रियेषु कस्यचिद्गोचरत्वमात्रेण प्रत्यक्षत्वसिद्धेस्त्वगिन्द्रियेण ज्ञायमानस्य वायोरप्रत्यक्षत्वं न सम्भवतीत्यर्थः ॥

अथ परस्परविलक्षणस्वभावेषु भूतविशेषेषु ज्ञातव्यांशानाह.

**तेजो भौमादिभेदेन बहुविधम्.**

तेज इत्यादिना. भौमं दिव्यमौदर्यमाकरजमिति भेदेनानेकविधमित्यर्थः. पार्थिवमात्रेन्धनं तेजो भौमं, तच्च दीपादि. जलमात्रेन्धनं तेजो

दिव्यं, तच्च सूर्यादि. पार्थिवजलेन्धनं तेज औदर्य्यं, तच्च जाठराग्निः. निरिन्धनं तेज आकरजम्. तत्सुवर्णादि.

अत्र स्थिरास्थिरविभागं करोति.

**अत्रादित्यादितेजः स्थिरम्, दीपादितेजोऽस्थिरम्. तेजसो वर्णो रक्तः, स्पर्श औष्ण्यम्म् । जलस्य रूपं शुक्लं, स्पर्शः शैत्यं, रसो माधुर्य्यम्म् । भूमे रूपं रसश्च बहुविधः, स्पर्शोऽस्या वायोश्चानुष्णाशीतः ।**

अत्रादित्यादीत्यादिना[1]. चिरकालवर्तित्वेनादित्यादितेजः स्थिरमित्युच्यते, क्षिप्रविनाशित्वेन दीपादितेजो ऽस्थिरमित्युच्यते. तेजस इति, तथा च तेजःपदार्थेषु वर्णभेदः पदार्थान्तरसंसर्गकृत इति भावः.

स्पर्श औष्ण्यमिति, उष्णस्पर्शशीतस्पर्शानुष्णाशीतस्पर्शेषु त्रिषु अस्य स्पर्श औष्ण्यमित्यर्थः. इदञ्च स्वर्णादितेजःपदार्थेषु बलवत्सजातीयद्रव्यैरभिभूतत्वान्न प्रतीयते ।

जलस्येति,शुक्ल इति,स्वाभाविकवर्णोऽयम्, वर्णभेद औपाधिकः. शैत्यमिति, त्रिविधस्पर्शेषु शैत्यमस्येत्यर्थः. अतोऽस्य स्पर्शभेदोऽन्यन्यसंसर्गेण. रसो माधुर्य्यमिति. अयमस्य स्वाभाविको रसः, रसान्तरापत्तिः संसर्गजेति भावः ।

भूमेरिति, लोके परिदृश्यमाननानाविधवर्णानां रसानाञ्चोत्पत्तिस्थानमियमेवेत्यर्थः । स्पर्श इति, त्रिविधस्पर्शेषु अनयोरयं स्पर्श इत्यर्थः.

अथ सिंहावलोकनन्यायेन पूर्वोक्तं सर्वमनुभाषमाणोऽचित्तत्वोपन्यासं निगमयति.

**एवमचित्त्रिविधम्म् ॥**

एवमित्यादिना. एवं प्रथममचिज् ज्ञानशून्यं विकारास्पदमिति

---

(१) अत्रादि इत्यादिनेति पु. पा. ।

लक्षणमुक्त्वा, ऽनन्तरं शुद्धसत्त्वादिभेदेन त्रिविधमित्युक्तोद्देशक्रमेण प्रथमं शुद्धसत्त्वप्रकारानुक्त्वा, ऽनन्तरं मिश्रसत्त्वस्याचितः प्रकारं तस्य चतुर्विंशतिविधत्वमुक्त्वा, तत्र प्रथमतत्त्वम् तस्यावस्थाविशेषान् तत-स्तत्त्वान्तरोत्पत्तेर्हेतुं गुणवैषम्यम् तेषाङ्गुणानां स्वरूपं तेषां तदवि-नाभूतत्वम् तदवस्थाभेदैरनुद्भूतत्वोद्भूतत्वे तेषाङ्कार्य्यानुमेयत्वम् तद्वै-षम्यप्रयुक्तमहदादितत्त्वोत्पत्तिक्रमञ्चाभिधाया, नन्तरमेवमुत्पन्नतत्त्वस-मुदायकार्याण्डोत्पत्तिं तस्मिन्नण्डे समष्टिपुरुषस्य चतुर्मुखस्योत्प-त्तिमीश्वरस्य समष्टिव्यष्टिपदार्थानां सद्वारकाद्वारकसृष्टिप्रकारं चोक्त्वा, ऽनन्तरमण्डानाम्बहुत्वम् तद्रचनाक्रमम् तेषामीश्वरलीलोपकरणत्वम् तेषामुत्पत्तिप्रकारं चाभिधाया, ऽनन्तरमाकाशादिभूतानां प्रत्येकाविनि-योगं ज्ञानकर्मेन्द्रियाणामुभयात्मकस्य मनसश्च वृत्तिभेदमाकाशादी-नां शब्दादिप्रतिनियतगुणकत्वम् तेषां विनिमयस्य हेतुम् गुणाधिक्य-हेतुश्चाभिधायैवं मिश्रसत्त्वप्रकारान् विस्तरेणोपपाद्या, ऽनन्तरन्तत्परि-णामहेतुं सत्त्वशून्यमचिद्विशेषं सङ्ग्रहेणोक्त्वा, एतत्पूर्वोक्तस्याचितो विनियोगप्रकारमचित्त्रयस्य परिणामानभिधायैतद्दर्शनैकदेशिनां का-लविषयविप्रतिपत्तिभेदमभिधाया, ऽनन्तरं पूर्वोक्तविषये बाह्यकुदृ-ष्टीनां विप्रतिपत्तिं तदयुक्तत्वं चाभिधाया, ऽनन्तरं परस्परविलक्ष-णभूतेषु ज्ञातव्यांशश्च प्रदर्श्यैवमचित्त्रयस्य प्रकारो निगमितः ॥*॥

## ॥ अथेश्वरतत्त्वं निरूप्यते ॥

एवं चिदचिद्रूपस्य तत्त्वद्वयस्य स्वरूपस्वभावविशेषान् सुव्यक्तमुक्त्वेदानीं क्षरात्मानावीशते देव एक इत्युक्तप्रकारेण तदुभयनियन्तुरीश्वरस्य स्वरूपस्वभावविशेषादीन्निःसंशयविपर्ययमाह. तत्र प्रथमं चूर्णिकयेश्वरत्वस्यासाधारणतया वस्तुनिरूपकत्वादीश्वर इति वस्तु निर्दिश्य तत्स्वरूपादिवैलक्षण्यं सङ्ग्रहेणाह. तत्र प्रथमं गुणादीनामाधारभूतस्य स्वरूपस्य वैलक्षण्यमाह

**ईश्वरो ऽखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपो ज्ञानशक्त्यादिकल्याणगुणविभूषितः सकलजगत्सृष्टिस्थितिसंहारकर्ता "आर्तो जिज्ञासुरर्थार्थी ज्ञानी" त्युक्तचतुर्विधपुरुषसमाश्रयणीयो धर्मार्थकाममोक्षाख्यचतुर्विधफलप्रदो विलक्षणविग्रहयुक्तो लक्ष्मीभूमिनीला(१) नायकः.**

अखिलेत्यादिना. अखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूप इति, समस्तहेयप्रतिभटत्रिविधपरिच्छेदरहितस्वयम्प्रकाशत्वसुखरूपैकाकारस्वरूपवानित्यर्थः. सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेति श्रूयते. "अखिलहेयप्रत्यनीककल्याणैकतानस्वेतरसमस्तवस्तुविलक्षणज्ञानानन्दैकस्वरूप" इति श्रीभाष्यकारैरुक्तम्, तथानेनाप्युक्तम्.

ननु तर्हि कल्याणैकतानत्वं स्वेतरसमस्तवस्तुविलक्षणत्वं चात्र कुतो नोक्तमिति चेन्न; यत्र हेयप्रत्यनीकत्वम्, तत्र कल्याणैकतानत्वस्यावश्यकत्वादानन्दरूपत्वोक्तेश्च स्वत एव सिद्ध्यतीत्यभिप्रायेण कल्याणैकतानत्वं नोक्तम्, स्वेतरसमस्तवस्तुविलक्षणत्वस्योभयलिङ्गप्रयुक्तत्वादर्थादुक्तं भवतीति तदपि नोक्तम्.

---

(१) लीलेति पु. पा. ।

ज्ञानशक्त्यादिकल्याणगुणविभूषित इति, आदिपदेन गुणचूर्णिकायां भाष्यकारोक्ताः सर्वे गुणाः परिगृह्यन्ते. गुणानां कल्याणत्वमाश्रितानां परमभोग्यत्वम्, गणशब्दस्समूहवाची, भूषितत्वमेतैरलङ्कृतत्वं, दिव्यमङ्गलविग्रहस्य दिव्याभरणानीव स्वरूपस्य गुणा औज्ज्वल्यापादकाः. अनेन, यः सर्वज्ञः सर्ववित्, परा ऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, समस्तकल्याणगुणात्मको ऽसौ इत्युक्तो गुणयोगो ऽभिहितः.

सकलजगत्सर्गस्थितिसंहारकर्त्रेति, जगच्छब्देन कार्यवस्तूच्यते. सकलशब्देन समष्टिव्यष्टिरूपाः समस्तपदार्था उच्यन्ते. सर्गः सृष्टिः, इयञ्च सद्वारिका ऽद्वारिका चेति द्विविधा. स्थितिः रक्षणम्. इयञ्च बाह्यान्तररूपेण द्विविधं. संहारो नाशः, अयञ्च सद्वारकाऽद्वारकभेदेन द्विविधः. एतत्सर्वं मूलकृदुपपादनावसरे द्रष्टव्यम्. यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे" त्यादिश्रुतिभिरस्य सकलजगत्सर्गादिरुक्तः अनेन पूर्वोक्तगुणविशिष्टस्य व्यापारविशेषा अभिहिताः.

आर्तो जिज्ञासुरर्थार्थी ज्ञानीत्युक्तचतुर्विधपुरुषसमाश्रयणीय इति, आर्तः पूर्वैश्वर्यस्य भ्रष्टस्य प्राप्तिकामः. जिज्ञासुः ज्ञानरूपस्यात्मनो ऽनुभवाभिलाषी केवलः. अर्थार्थी अपूर्वैश्वर्याभिलाषी. ज्ञानी परमपुरुषार्थरूपभगवत्प्राप्तिकामः. आर्तः प्रतिष्ठाहीनो भ्रष्टैश्वर्यः पुनस्तत्प्राप्तिकामः. अर्थार्थी अप्राप्तैश्वर्यतया ऐश्वर्यकामः. तयोर्मुखभेदमात्रमैश्वर्यविषयतया एक एवाधिकारः. जिज्ञासुः प्रकृतिवियुक्तात्मस्वरूपावाप्तीच्छुः. ज्ञानमेवास्य स्वरूपमिति जिज्ञासुरित्युक्तम्. ज्ञानी च इतस्त्वन्यां प्रकृतिं विद्धि मे परामित्यादिनाभिहितभगवच्छेषतैकरसात्मस्वरूपवित् प्रकृतिवियुक्ते केवलात्मन्यऽपर्य्यवस्यन् भगवन्तमेव परमप्राप्यं मन्वान इति चतुर्विधाधिकारवेषः श्रीगीताभाष्ये ऽभिहितः. एतच्चतुर्विधपुरुषसमाश्रयणीयत्वं

> चतुर्विधा भजन्ते मां जनाः सुकृतिनो ऽर्जुन ।
> आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ इति
> चतुर्विधा मम जना भक्ता एव हि ते श्रुताः ।
> आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी चेति पृथक्पृथक् ॥

स्वयमेवाह. अनेन जगत्कारणत्वेन पूर्वोक्तस्य सर्वसमाश्रयणीयत्वमुच्यते.

धर्मार्थकाममोक्षाख्यचतुर्विधफलप्रद इति, "धर्म्मार्थकाममोक्षाख्यः पुरुषार्थ उदाहृत" इति पुरुषार्थश्चतुर्विधः. तत्र धर्म्म इष्टापूर्तानि. तत्रेष्टं यागादि. पूर्तं खातादि. अर्थः सुवर्णरजतादयः. कामः ऐहिक[1] पारलौकिकभोग्यपदार्थानुभवसुखम्. मोक्षः आत्मानुभवभगवदनुभवौ. अत्र धर्म्मः साधनतया पुरुषार्थः. अर्थः साधनतया[2] पुरुषार्थः, स्वयंपुरुषार्थश्च. काममोक्षौ स्वयम्पुरुषार्थौ. एवम्भूतांश्चतुर्विधपुरुषार्थानधिकारानुगुणं ददातीत्यर्थः. अनेन सकलसमाश्रयणीयस्यास्य सकलफलप्रदत्वमुच्यते.

> देवेन्द्रस्त्रिभुवन, मर्थमेकपिङ्गः,
> सर्वर्द्धिन्त्रिभुवनगाञ्च कार्त्तवीर्यः, ।
> वैदेहः परमपदम्प्रसाद्य विष्णुं
> सम्प्राप्तः सकलफलप्रदो हि विष्णुः ॥

इत्यादि.

विलक्षणविग्रहयुक्त इति, विग्रहश्च स्वरूपगुणेभ्य इत्यन्ताभिमत इत्यारभ्य वक्ष्यमाणवैलक्षण्ययुक्तविग्रहेण युक्त इत्यर्थः. "नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा" इत्यादिना विग्रहवैलक्षण्यं श्रुतिसिद्धम्. 'स्वाभिमतानुरूपैकरूपा ऽचिन्त्या दिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यरूपे' तिदिव्यमङ्गलविग्रहवैलक्षण्यं भाष्यकारैरुक्तम्. अनेन पूर्वोक्त स्वरूपगुणानां प्रकाशकस्य जगत्कारणत्वसर्वसमाश्रयणीयत्वसर्वफलप्रदत्वानामेकान्तस्य दिव्यमङ्गलविग्रहस्य योग उच्यते.

लक्ष्मीभूमिनीला[3]नायक इति, "तवानुरूपे" त्युक्तवैलक्षण्यवत्याश्चेतनानां पुरुषकारभूतायाः प्राप्यभूतायाः प्रधानमहिष्यास्तत्तुल्यतयाभिधीयमानयोर्भूमिनील[3]योर्दिव्योश्चानुरूपो नायक इत्यर्थः "ह्रीश्च ते लक्ष्मीश्च ते पत्न्या"विति लक्ष्मीभूम्योर्वेदपुरुषेणाभिधानं नीला[3]या अप्युपलक्षणम्.

---

(१) एहिकमिति व्यस्तः पु. पा. ।
(२) साधकतयेति अत्र पु. पा. । (३) लीलेति पु. पा. ।

वैकुण्ठे तु परे लोके श्रिया सार्द्धं जगत्पतिः ।
आस्ते विष्णुरचिन्त्यात्मे " ति
वैकुण्ठे तु परे लोके श्रीसहायो जनार्द्दनः ।
उभाभ्यां भूमिनीलाभ्यां सेवितः परमेश्वरः ॥

इत्यादि प्रमाणम्. स्वाभिमतनित्यनिरवद्यानुरूपस्वरूपरूपगुणविभवैश्वर्य्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणश्रीवल्लभ एवंभूतभूमिनीलानायक इति श्रीभाष्यकारैरुक्तम्. अनेन पूर्वोक्तविग्रहवैलक्षण्यं यथा काननचन्द्रिका न भवे, तथा तदनुभवन्तीनां महिषीणां साहित्यमुक्तम् ।

अथैवमुक्तान् स्वरूपादीनुरुपपादयति[1] तत्र प्रथममखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूप इत्यत्राखिलहेयप्रत्यनीकत्वमुपपादयति .

## अखिलहेयप्रत्यनीकत्वन्नाम तमसस्तेजोवत् सर्पस्य गरुडवद्विकारादिदोषाणाम्प्रतिभटत्वम्.

अखिलहेयप्रत्यनीकत्वन्नामेत्यादिना. अखिलहेयेत्यनेन त्रिविधचेतनाचेतनदोषा अप्युच्यन्ते. त्रिविधचेतनाचेतनदोषा ईश्वरस्य न स्युरिति. तमसस्तेजोवत्सर्पस्य गरुडवदिति. तमसः प्रतिभटत्वं तेजस इव सर्पस्य प्रतिभटत्वं गरुडस्येव चेत्यर्थः . विकारादिदोषाणामित्यत्र विकारशब्देन त्रिविधाचिताम्परिणाम उच्यते . आदिशब्देन बद्धचेतनानामज्ञानदुःखादयः मुक्तानां प्रकृतिसंसृष्टविमुक्ताकारो नित्यानां परिच्छिन्नस्वरूपत्वपारतन्त्र्ये चोच्येते. ननु किम्पारतन्त्र्यं दोष इति चेत्पुरुषस्य स्तनोद्भेदवत्स्वतन्त्रस्य दोषः. एतद्दोषाणाम्प्रतिभटत्वन्नाम' शत्रुत्वम्. प्रतिभटत्वमित्युक्त्या आत्मा ज्ञानमयोऽमल इत्युक्तप्रकारेण स्वरूपनिबन्धनमलसम्बन्धाभावेऽप्युपाधिनिबन्धनमलसंबन्धयोग्यादात्मस्वरूपाद्भगवत्स्वरूपस्य वैलक्षण्यमुच्यते.

तद्ब्रह्म परमन्नित्यमजमक्षयमव्ययम् ।
एकस्वरूपन्तु सदा हेयाभावाच्च निर्म्मलम् ॥

---

( १ ) स्वरूपादीरुपपादयतीति पु. पा. ।

समस्तहेयरहितं विष्णवाख्यं परमम्पदम् ।
अविकाराय शुद्धाय नित्याय परमात्मने ।

इत्यादि प्रमाणम् ।

'हेयप्रत्यनीकत्वन्नामाश्रितहेयनिरासकत्वनिदानं. हेयप्रतिभटत्वमित्यपि योजना गद्यव्याख्याने वेदान्तकलिवैरिदासप्रभृतिभिरुक्ता. सर्पस्य गरुडवदितिदृष्टान्तबलेन सोऽप्यत्रार्थो भवत्विति चेद्, विकारादिदोषाणाम्प्रतिभटत्वमित्युक्तत्वादत्रास्य सा न विवक्षिता .

अनन्तरमनन्तत्वमुपपादयति

**अनन्तत्वन्नाम नित्यत्वे सति चेतनाचेतनव्यापकत्वे सत्यऽन्तर्य्यामित्वम्म्.**

अनन्तत्वन्नामेत्यादिना . अनन्तत्वं देशतः कालतः वस्तुतश्चापरिच्छिन्नत्वम्. विभुत्वाद्देशपरिच्छेदराहित्यम् . नित्यत्वात्कालपरिच्छेदराहित्यम्. स्वव्यतिरिक्तसमस्तवस्तूनाम्प्रकारित्वात्स्वस्य प्रकार्य्यन्तराभावात्सदृशवस्त्वभावेन वस्तुपरिच्छेदराहित्यम्, तदेवाह नित्यत्वे सतीत्यादिना . तथाच नित्यत्वात् अस्मिन् काले ऽस्ति अस्मिन् काले नास्तीति कालपरिच्छेदो नास्ति . सकलचेतनाचेतनव्यापकतया विभुत्वात् अस्मिन्देशेऽस्ति देशान्तरे नास्तीति देशपरिच्छेदो नास्ति. सर्वान्तर्य्यामितया सर्वप्रकारित्वात्स्वस्य प्रकार्य्यन्तराभावादेतद्वस्तुवदिति वस्तुपरिच्छेदोऽपि नास्तीति सिद्धम् . नित्यं विभुं सर्व्वगतं सुसूक्ष्मम्, अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा, यस्यात्मा शरीरम् यस्य पृथिवी शरीरम्, न तत्समश्चाभ्यधिकश्च दृश्यते इत्यादि .

नन्वेतैरसंबन्धं विनान्तर्य्यामितया तिष्ठति चेत्तद्गतदोषाणाम्प्रसङ्ग इत्याशङ्कामनुवदति

**अन्तर्यामी चेद्दोषास्स्युरिति चेत्, शरीरगतबाल्ययौवनादयो जीवात्मन इव त्रिविधचेतनाचेतनगतदोषा ईश्वरस्य न स्युः.**

अन्तर्यामी चेदित्यादिना. तत्परिहरति शरीरगतेत्यादिना. एतच्छरीरमधिष्ठाय स्वाधीनन्निर्वहतोऽपि तद्गता बाल्ययौवनादिविकारास्तदन्तर्वर्तिनो जीवात्मनो यथा न भवन्ति, तथा त्रिविधचेतनाचेतनानामन्तर्यामितया तच्छरीरकस्यापि तद्गतदोषा ईश्वरस्य न स्युरित्यर्थः. ननु शरीरिणो जीवस्य शरीरगतबाल्याद्यभावेऽपि शरीरसंबन्धनिबन्धना दुःखाज्ञानादयो भवन्ति, एवं शरीरभूतैतत्सम्बन्धेनास्यापि केचन दोषास्स्युरिति चेन्न, तत्र कारणं प्रवेशहेतुविशेषः. अस्य कर्ममूलकस्तत्र प्रवेशः, तस्य त्वनुग्रहमूलकस्तत्र प्रवेशः . अनश्नन्नन्यः, एष सर्वभूतान्तरात्मा ऽपहतपाप्मा, विष्णवे सर्वजिष्णवे.

अथ ज्ञानानन्दैकस्वरूपमुपपादयति

## ज्ञानानन्दस्वरूपत्वन्नाम आनन्दरूपज्ञानात्मकत्वम्म्.

ज्ञानानन्देत्यादिना. ज्ञानानन्दौ स्वरूपं यस्य तथाविध इतिशब्दार्थत्वेपि आनन्देत्याद्यभिधानं ज्ञानमानन्द इत्यवस्थाद्वयं न भवति, किन्तु ज्ञानमेव स्वरूपम् . तच्चानुकूलम्भवतीति ज्ञापनार्थमानन्दरूपत्वादानन्दरूपज्ञानत्वमित्युक्तम् . अनुकूलज्ञानस्यैव स्वरूपत्वेऽपि ज्ञानानन्देति पृथगभिधानमुभयोपपादनार्थमिति स्वीयगद्यव्याख्याने स्वयमवोचत्.

आनन्दरूपज्ञानत्वमुपपादयति

## तच्च कात्स्न्र्येनानुकूलत्वं प्रकाशस्वरूपत्वञ्च.

तच्चेत्यादिना . कात्स्न्र्येनेति, यावत्स्वरूपमित्यर्थः. अनेकस्वरूपे ननुकूलप्रदेशोऽप्रकाशप्रदेशश्च नास्तीति सिद्धम्. ज्ञानानन्दैकस्वरूपेत्यत्राऽयमेकशब्दार्थः. अनुकूलत्वमाह्लादकरत्वम्. प्रकाशरूपत्वं स्वयम्प्रकाशत्वम् , अनन्याधीनप्रकाशत्वाह्लादकरत्वरूपज्ञानमेव यस्य

स्वरूपं स हि ज्ञानानन्दैकस्वरूप इतीत्युक्तम्. एवं स्वरूपवैलक्षण्योपपादनानन्तरं स्वरूपाश्रितानां वैलक्षण्यमाह.

**अस्य ज्ञानशक्त्यादिकल्याणगुणाः नित्या निस्सीमा निस्संख्या निरुपाधिका निर्दोषाः समाधिकरहिताश्च ।**

अस्य ज्ञानशक्तीत्यादिना. आदिशब्देन बलैश्वर्य्यवीर्यतेजांसि वात्सल्यादयः शौर्य्यादयश्च गुणविशेषा उच्यन्ते. नित्यत्वन्नामोत्पत्तिविनाशरहितत्वम्. स्वरूपानुबन्धित्वाद्यावदाश्रयभाविनो भवन्ति खलु. गुणानां नित्यत्वं "त इमे सत्याः कामा" इतिश्रुतिसिद्धम्. काम्यन्त इति कामाः कल्याणगुणाः, त इमे सत्याः नित्या इत्यर्थः. निरवधिकोदारगुण इति दिव्यसूरिणः. निःसीमा इति, प्रत्येकं निरवधय इत्यर्थः. यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति. निवर्त्तते खल्वानन्दगुणावाधिं द्रष्टुमुद्यता वेदः. इदमानन्दगुणस्यैकस्यैव न भवति, सर्वे गुणा एवमेव भवन्ति ।

उपर्युपर्यब्जभुवो ऽपि पूरुषान्
प्रकल्प्य ते ये शतमित्यनुक्रमात् ।
गिरस्त्वदेकैकगुणावधीप्सया
सदाऽऽस्थिता[1] नोद्यमतो ऽतिशेरते ॥

इत्यादि. निस्संख्या इति, एतादृशगुणाः संख्याशून्या इत्यर्थः.

यथा रत्नानि जलधेरसंख्येयानि पुत्रक ।
तथा गुणा ह्यनन्तस्य असंख्येया महात्मनः ॥

वर्षायुतैर्य्यस्य गुणा न शक्या
वक्तुं समेतैरपि सर्वलोकैः ।
महात्मनः शङ्खचक्राऽसिपाणे-
र्विष्णोर्जिष्णोर्वसुदेवात्मजस्य ॥

(१) सदोत्थिता इति पु. पा. ।

चतुर्म्मुखो वा यदि कोटिवक्त्रो
भवेन्नरः क्वापि विशुद्धचेताः ॥
स ते गुणानामयुतैकमंशं
वदेन्न वा देव वर प्रसीद ॥

नहि तस्य गुणाः सर्वे सर्वैर्म्मुनिगणैरपि ।
वक्तुं शक्या वियुक्तस्य सत्वाद्यैरखिलैर्गुणैः ॥

इत्यादि . संख्याशून्यानादिगुण इति दिव्यसूरिणः ।

येष्वेकैकगुणस्य[1] विप्रुडपि वै लोकोत्तरं स्वाश्रयं
कुर्य्यात्तादृशवैभवैरगणितैर्न्निःसीमभूमान्वितैः ।
नित्यैर्द्दिव्यगुणैस्ततो ऽधिकशुभत्वैकास्पदात्माश्रयै-
रित्थं सुन्दरबाहुमास्मि शरणं यातो वनाद्रीश्वरम् ॥

इति श्लोके गुणानां नित्यनिस्सीमनिस्संख्यत्वान्याह कूरेशः. निरुपाधिका इति, परतन्त्रवस्तुगतत्वात्स्वोदयादिष्वीश्वरेच्छामुपाधिमपेक्षमाणेभ्यश्चेतनगुणेभ्यो विलक्षणाः स्वाभाविका इत्यर्थः. श्रीभाष्ये स्वभावतो निरस्तनिखिलदोषगन्धो ऽनवधिकातिशयाऽसंख्येयकल्याण[2]गुणगणः पुरुषोत्तमो ऽभिधीयत इतिस्थलस्य व्याख्यानं ब्रुवन् श्रुतप्रकाशिकाकारः, अनवधिकातिशयपदेन नित्यासिद्धव्यावृत्तिरुच्यत इति प्रथममेकयोजनां कृत्वा ऽनुषक्तेन स्वभावत इति पदेन वा नित्यसिद्धव्यावृत्तिः. तेषां तादृशगुणकत्वं हि भगवन्नित्येच्छाधीनमित्य ऽनन्तरयोजनायाममुमर्थमवोचत् . स्वाभाविकी ज्ञानबलक्रिया चेति गुणानां स्वाभाविकत्वं श्रुतिराह. अस्यां श्रुतौ क्रियेति नियमनमुच्यते, पराऽस्येति ज्ञानशक्त्यादीनां स्वाभाविकत्वमुक्तम्. क्रिया नियमनमिति हि श्रुतप्रकाशिकाकारव्याख्यानम्. निर्द्दोषा इति, हेयगुणसंसर्गरूपदोषरहिता इत्यर्थः. अपहतपाप्मा विजरो विमृत्युर्व्विशोको विजिघत्सो[3] ऽपिपासः सत्यकामः सत्यसङ्कल्पः

---

( १ ) येष्वेकस्य विप्रुडपीति पु. पा. ।
( २ ) अनवधिकातिशयकल्याणेति पु. पा. ।
( ३ ) विजिघित्सत इति पुस्तकगतपाठस्तु लेखकप्रमादजन्यः ।

सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ।
ज्ञानशक्तिबलैश्वर्य्यवीर्य्यतेजांस्यऽशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥
तेजोबलैश्वर्यमहावबोधसुवीर्य्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे ॥

इत्युक्तप्रकारेणाश्रयस्य हेयप्रत्यनीकत्वात् एतेषां हेयगुणसंसर्ग-दोषापत्तेर्य्योग्यता नास्तीति भावः. समाधिकरहिता इति, चेतनगुणानां चेतनान्तरगुणास्समाः ईश्वरगुणा अधिकाः. एते स्वसदृशास्वाधिकगुणशून्या इत्यर्थः. न तत्समश्चाभ्यधिकश्च दृश्यत इत्युक्तसमाधिक-दरिद्रवस्त्वाश्रयकत्वादेतेपि समाधिकरहिता इति भावः.

दोषोपधावधिसमातिशयानसंख्या
निर्लेपमङ्गलगुणौघदुघाःषडेताः ।
ज्ञानैश्वरीशकनवीर्यबलार्चिषस्त्वां
रङ्गेश भास इव रत्नमनर्घयन्ति ॥

इति श्लोके ऽयमर्थो भट्टार्य्यैरुक्तः. एतादृशगुणानां त्रैविध्यात् त्रिविधानामपि विषयान् विभज्याह

## एतेषु वात्सल्यादीनां विषया अनुकूलाः. एतत्कारणभूतानां ज्ञानशक्त्यादीनां सर्वे विषयाः.

एतेष्वित्यादिना. वात्सल्यादीनामित्यादिशब्देन सौशील्यसौलभ्यमार्दवार्ज्जवादयो गुणविशेषा अभिधीयन्ते. तेषां विषया अनुकूला इति, आश्रिता इत्यर्थः. शौर्य्यादीत्यत्रादिपदेन पराक्रमादय उच्यन्ते विषयाः प्रतिकूला इति, आश्रितविरोधिन इत्यर्थः.

द्विषदन्नन्न भोक्तव्यं द्विषन्तन्नैव भोजयेत् ।
पाण्डवान् द्विषसे राजन् मम प्राणा हि पाण्डवाः ॥

इत्याश्रितविरोधिनः स्वस्य शत्रव इत्यवोचत्. एतत्कारणभूतानां ज्ञानशक्त्यादीनामित्यत्रादिशब्देन बलैश्वर्य्यतेजांस्युच्यन्ते. ज्ञानशक्त्यादीनां वात्सल्यादिशौर्य्यादिकारणत्वम्.

प्रकृष्टं विज्ञानं बलमतुलमैश्वर्य्यमखिलं
विमर्य्यादं वीर्य्यं वरद परमा शक्तिरपि च ।
परन्तेजश्चेति प्रवरगुणषट्कं प्रथमजं
गुणानां निस्सीमानां[१] गणनविगुणानाम्प्रसवभूः ॥

इति 'मङ्गलगुणौघदुघाः षडेता'इति चोक्त[२]प्रकारेण तेषामाविर्भावस्थानत्वम्. ते च वस्तूत्कर्षापादकषाड्गुण्यायत्तगुणभावा वर्त्तन्ते. स्वामिनो दिव्यात्मगुणाः ज्ञानशक्त्यादिषड्गुणास्तत उत्पन्नास्सौशील्यादयश्चेत्यस्य वाक्यस्यार्थाभिधानसमये तत उत्पत्तिर्नाम वस्तूत्कर्षापादकषाड्गुण्यायत्तगुणभावत्वमिति विवरणे कृष्णपादैरुक्तम्. एतेषु षड्गुणेषु ज्ञानमऽजडं स्वात्मसम्बोधि नित्यं सर्व्वावगाहनम्, 'ज्ञानं नाम गुणम्प्राहुः प्रथमं गुणचिन्तका' इत्युक्तप्रकारेण सर्वदा सर्वविषयप्रकाशकः स्वप्रकाशो गुणविशेषः.

शक्तिः 'जगत्प्रकृतिभावो यः सा शक्तिः परिकीर्तिते'त्युक्तो जगत्प्रकृतिभावो ऽघटितघटनासामर्थ्यं वा.

बलम् 'श्रमहानिस्तु या तस्य सततं कुर्वतो जगत् । बलन्नाम गुणस्तस्य कथितो गुणचिन्तकैरि'त्युक्तो जगत्कारणत्वप्रयुक्तश्रमाभावो वा 'बलं धारणसामर्थ्य'मित्युक्तं समस्तवस्तुधारणसामर्थ्यं वा.

ऐश्वर्य्यं नाम 'कर्तृत्वन्नाम यत्तस्य स्वातन्त्र्यपरिबृंहितम् । ऐश्वर्य्यन्नाम तत्प्रोक्तं गुणतत्वार्थचिन्तकै'रित्युक्तकर्तृत्वलक्षणं स्वातन्त्र्यं वा समस्तवस्तुनियमनसामर्थ्यं वा.

वीर्य्यन्नाम तस्योपादानभावे ऽपि विकारविरहो हि यः । वीर्य्यं नाम गुणः सोयमच्युतत्वापराह्वयः ॥ इत्युक्ता[३] जगदुपादानत्वे ऽपि स्वरूपविकाराभावरूपा ऽविकारिता. तेजो नाम 'सहकार्य्यनपेक्षा या तत्तेजः समुदाहृत'मित्युक्तं सहकारिनैरपेक्ष्यं वा पराभिभवनसामर्थ्यं वा. एतेषां सर्वे विषया इति, अनुकूलरक्षणादीनाम्प्रतिकूलनिरसनादीनां च ज्ञानशक्त्यादिमतैव निर्वाह्यत्वात् एतेषां सर्वे विषया इत्यर्थः. एवं त्रिविधानां गुणानां विषयाः प्रदर्शिताः।

---

(१) निस्सीम्नां गणनेति पु. पा. ।
(२) षडेते चोक्तेति पु. पा. ।
(३) इत्युक्त्वेति पु. पा. ।

अथ गुणानां प्रत्येकं विषयसत्त्वात्तानपि दर्शयितुं विचार्यर्थं पूर्वोक्तगुणेषु केषाञ्चित्प्रत्येकं विषयान् दर्शयति

**ज्ञानमज्ञानां, शक्तिरशक्तानां[1] क्षमा सापराधानां, कृपा दुःखिनां, वात्सल्यं सदोषाणां, शीलं मन्दाना, माऽऽर्जवं कुटिलानां, सौहार्द्दं दुष्टहृदयानां[2], मार्दवं विश्लेषभीरूणां, सौलभ्यं द्रष्टुमाशावताम्,**

ज्ञानमज्ञानामित्यादिना. ज्ञानमज्ञानामिति, ज्ञानं चेतनानां हिताहितनिरूपणोपयोगिगुणत्वात्

> काहमत्यन्तदुर्बुद्धिः क चात्महितवीक्षणम् ।
> यद्धितम्मम देवेश तदा ऽऽज्ञापय माधव ॥

इत्युक्तप्रकारेण हितनिरूपणादावज्ञानामुपयोगि भवतीत्यर्थः.

शक्तिरशक्तानामिति, शक्तिरघटितघटनासामर्थ्यरूपत्वात्स्वेष्टानिष्टप्राप्तिपरिहारयोरशक्तानान्तेषां कार्य्यसिद्ध्युपयोगिनीत्यर्थः ।

क्षमा सापराधानामिति, क्षमाऽपराधसहत्वम्. अतः "अहमस्म्यपराधानामालयोऽकिञ्चनोऽगति" रित्युक्तप्रकारेणापराधसहत्वं पुरुषकृत्याश्रयतां स्वात्मनो ऽपराधसहितानुसन्दधतामुपयोगिनीत्यर्थः. "क्षमा सापराधे ऽनुतापिन्युपेयात्कथं सापराधेपि दृप्ते मयि स्या" दिति भट्टार्य्यः.

कृपा दुःखिनामिति, कृपा परदुःखासहिष्णुत्वरूपत्वात् के वा सहाया भवन्तीति वीचिमत्समुद्रमज्जमान[3] नौकावत्संसारसागरे स्थित्वाहं व्याकुलो भवामीत्युक्तदुःखिनामुपयोगिनीत्यर्थः. दया परव्यसनहरा भवव्यथासुखायते मम तदहं दयातिग इति भट्टार्य्यः.

---

(१) शक्तिरसक्तानामिति पु. पा. ।

(२) दुर्हृदयानामिति अत्र मूले पु. पाठः ।

(३) नौकायाः परेषां पारप्रदत्त्वाभिमानगोचरत्वे स्वयंमज्जनात् कर्मण्यतिहारे शानच् स्यात् ।

वात्सल्यं सदोषाणामिति, वात्सल्यं सद्य उत्पन्नस्य वत्सस्य शरीरे मलमादृत्य भुञ्जानाया धेनोरिवाऽऽश्रितानां दोषाणां भोग्यतया स्वीकाररूपः कश्चिद्गुणविशेषः. अतस्तदऽविद्याकर्म्मादिदोषसहितत्वेन स्वात्मनो ऽनुसन्दधतामुपयोगीत्यर्थः.

शीलं मन्दानामिति, शीलं महतो मन्दैस्सह नीरन्ध्रेण संश्लेषस्वभावत्वात्स्वनिकर्ष[1] मनुसन्दधतामुपयोगीत्यर्थः.

आर्जवं कुटिलानामिति, आर्जवं करणत्रयेण ऋजुस्वभावरूपत्वात् स्वकरणत्रयकौटिल्यं चिन्तयतामुपयोगीत्यर्थः.

सौहार्दं दुष्टहृदयानामिति, सौहार्दं नाम सदाशुभचिन्तनस्वभावरूपत्वात् सर्वकालमपि अशुभं चिन्तयतो दुष्टहृदयान् स्वात्मनो ऽनुसन्दधतामुपयोगीत्यर्थः.

मार्दवं विश्लेषभीरूणामिति, मार्दवमाश्रितविरहासहिष्णुत्वस्वभावरूपत्वात् स्वविश्लेषभीरूणामुपयोगीत्यर्थः.

सौलभ्यं द्रष्टुमाशावता [मिति], सौलभ्यमतीन्द्रियविग्रहस्य नेत्रविषयत्वापादनरूपत्वात् स्वं द्रष्टुमाशावतामुपयोगीत्यर्थः.

अनेन तज्ज्ञानस्योपक्षा स्वस्वहिताहितनिरूपणे ऽज्ञानाम्. अतो ज्ञानमज्ञार्थम्भवति.

तस्य शक्तेरपेक्षा स्वेष्टानिष्टप्राप्तिपरिहारयोरशक्तानामेव.[2] अतः शक्तिरशक्तार्था भवति.

तस्य क्षमायामपेक्षाऽपराधिनामेव,-अतः क्षमा साऽपराधार्था. हाहेति कृपा दुःखिष्वेव कर्तव्येति कृपा दुःख्यर्था.

दोषवतामेव दोषो भोग्यतया स्वीकर्तव्यः, अतो वात्सल्यं सदोषार्थम्.

अपकर्षमदृष्ट्वा नीरन्ध्रेण संश्लेषः कर्तव्यः. अपकृष्टानामेव, अतः शीलं मन्दार्थम्.

---

( १ ) निष्कर्षमिति पु. पा. ।

( २ ) पुस्तके अशक्तानामित्यस्य स्थाने अक्तानामिति शोधनेनोपकल्पितमिति तत्र कारणं विमृशन्तु सुधियः ।

करणत्रयेणापि आर्जवेन स्वस्वविनियोजनं कुटिलानामेव, अत आर्जवं कुटिलार्थम्.

स्वस्य सदा शुभचिन्तनं स्वस्व[1] शुभचिन्तकानां विषय एव, अतः सौहार्दं दुष्टहृदयार्थम्.

विरहासहिष्णुत्वरूपमार्दवापेक्षा विरहभीरूणामेव, अतो मार्दवं विरहभीर्वर्थम्.

अतीन्द्रियस्य विग्रहस्य चक्षुर्विषयीकरणं तद्विग्रहदर्शनाशावतामेव, अतस्सौलभ्यं द्रष्टुमाशावतामिति गुणानां विषयप्रतिनियतत्वं दर्शितम्.

**एवं सर्वत्र द्रष्टव्यम् ।**

एवमिति. पूर्वोक्तप्रकारेणानुक्तगुणानां सर्वेषाम्प्रत्येकं विषया द्रष्टव्या इत्यर्थः. एवंभूतगुणविशिष्टेनेश्वरेणाश्रितविषये क्रियमाणान् व्यापारानेकया चूर्णिकयाह

**एवमीश्वरः कल्याणगुणैर्युक्तत्वा,दऽन्येषां दुःखे दृष्टे हाहेति कृपां कृत्वा, तेषां सर्वदा ऽविशेषेण शुभं विचिन्त्य, केवलस्वार्थास्थितिं[2] स्वपरसाधारणस्थितिं[2] च विना चन्द्रिकादक्षिणानिलचन्दनशीताम्बुवत्तु केवलपरार्थस्सन्, स्वमाश्रितेषु जन्मज्ञानवृत्तानिबन्धनापकर्षमपश्यन्, स्वेषामन्येषामप्यनुपायत्वदशायां स्वयमुपायभूतः, सांदीपनिपुत्रस्य[3] वैदिकपुत्राणां च प्रत्यानयनवद् दुष्करव्यापारान्**

---

(१) स्वास्व — इति पु. पा. ।

(२) अवास्थितिमिति मूले पाठः ।

(३) सांदीपिपुत्रस्येति मूले टीकायां च पुस्तकगतः पाठः ।

कृत्वा तेषामपेक्षितानि[1] पूरयित्वा, तेषान्ध्रुवपदवत्प्रागविद्यमानमपि कल्पयित्वा, स्वस्यस्वस्य स्वं स्वेनस्वेन विनियुज्यत इति यथा ज्ञायते, तथात्मानमात्मीयानि च वितीर्य, तेषां कार्य्येषु निर्वृत्तेषु स्वयं कृतकृत्यः, स्वकृतं शुभमेकमप्यविचिन्त्य तेषां सुकृतलवमेव विचिन्त्याऽनादिकालं वासिता अपि रसाः सर्वे विस्मर्य्यन्ते यथा, तथा सर्वदा स्वयं भोग्यो, भार्य्यापुत्रादिदोषान् दृश्यमानानप्यपश्यन् वर्तमानः पुरुष इव तेषां हृदयेनास्मरन्, दोषेषु महालक्ष्म्या प्रदर्शितेष्वपि तस्याः प्रतिद्वन्द्वीभूय दृढः सन् रक्षित्वा, कामिनीमालिन्यादरवान् कामुक[2] इव तद्दोषान् भोग्यतया स्वीकुर्वन्, तेषु करणत्रयेणापि[3] ऋजु, र्विश्लेषे तेषां व्यसनं गोष्पदं यथा भवेत्तथा स्वयमवसन्न, स्तेषां यथेष्टं स्वात्मानमधीनं कृत्वा, तेषां बन्धनताडनादियोग्यतया सुलभो, यथा सद्योजाते वत्से प्रीत्या माता प्रथमवत्सं[4] ग्रासं दा-

---

( १ ) तदपेक्षितानीति समस्त पु. पा. ।

( २ ) मालिन्यमादरन् कामुक इति पुस्तके मूले टीकायां च पाठः ।

( ३ ) त्रयेण ऋजुरिति पु. पा. ।

( ४ ) वत्समिति मूले टीकायां च पु. पाठो ऽस्य चागतानित्यत्र संबन्धो द्रष्टव्यः ।

तुमागतानपि विषाणखुरयोः करोति, तथा महालक्ष्मीं नित्यसूरींश्च त्यक्त्वा स्नेहं कुर्वंस्तिष्ठति ।

एवमीश्वर इत्यादिना. एवमीश्वरः कल्याणगुणैर्युक्तत्वादित्यनेन प्रागुक्तगुणप्रकारः परामृश्यते. कल्याणगुणैर्युक्तत्वादिति गुणयोगस्य हेतुत्वाभिधानं वक्ष्यमाणपरिपाकाः सर्वे गुणकार्य्याणीति ज्ञापयितुम्.

अन्येषां दुःखे दृष्टे हाहेति कृपां कृत्वेति, इदं कृपाकार्य्यम् अन्यदुःखे दृष्टे हाहेत्यवसादः परदुःखासहिष्णुत्वात्खलु.

तेषां सर्वदा ऽविशेषेण शुभं विचिन्त्येति, इदं सौहार्दकार्य्यम्. सर्वदा ऽविशेषेणेति, एतेषां ज्ञानदशायामज्ञानदशायाश्चाविशेषेण सर्वस्मिन् काले इत्यर्थः. आश्रितसर्वमङ्गलान्वेषणपरत्वं सौहार्द्दवत्त्वादेव हि.

केवलस्वार्थस्थितिं स्वपरसाधारणस्थितिश्च विना चन्द्रिकादक्षिणानिलचन्दनशीताम्बुवत्केवलपरार्थः सन्निति, इदमाश्रितपारतन्त्र्यकार्य्यम्. केवलस्वार्थपरत्वं स्वार्थपरार्थसाधारण्यञ्च विना चन्द्रिकादिपदार्थवत्परार्थैकवेषता पारतन्त्र्यादेव खलु.

स्वमाश्रितेषु जन्मज्ञानवृत्तनिबन्धनापकर्षमपश्यन्निति, इदं साम्यगुणकार्य्यम्. आश्रितानां जन्मादिप्रयुक्तापकर्षमदृष्ट्वा वर्तनं समोऽहं सर्वभूतेष्वित्यादिप्रकारेण जन्मादिभिरुत्कृष्टानामपकृष्टानाञ्च समाश्रयणीयत्वे समत्वरूपस्वभावेन खलु.

स्वेषामन्येषामप्यनुपायत्वदशायां स्वयमुपायभूत इति, इदमशरणशरण्यत्व[1] कार्यम् स्वयं स्वेषां रक्षका न भवाम इति निवर्तन्ते यदा, एवमन्ये ऽपि निवर्तन्ते, तदाऽयं रक्षको भवति, अशरणानां[2] शरण्यत्वादेव खलु.

सांदीपनिपुत्रस्यवैदिकपुत्राणाञ्च प्रत्यानयनवद्दुष्करव्यापारान् कृत्वा तेषामपेक्षितानि पूरयित्वेति, इदं सत्यकामत्वकार्यम्. बाहुलकात् पूर्वसमुद्रे मग्नस्य सान्दीपनिपुत्रस्यजननसमय एव म-

---

(१) अशरण्यशरण्यत्वेति पु. पा. ।

(२) अशरण्यानामिति पुस्तके ऽत्रापि पाठः ।

त्राप्यऽदृष्टमुखानां दिव्यमहिषीभिः स्वस्वातन्त्रेणानीतानां स्वयंज्योतिस्स्वरूपे परमपदे स्थितानां वैदिकपुत्राणां च तत्तद्रूपेण सह पुनरानयनवद्दुष्करव्यापारकरणेनाऽऽश्रितापेक्षितपूरणम्. 'आश्रितरक्षणविषये मनोरथः कामः, सो ऽप्रतिहतो भवतीति सत्यकाम' इत्युक्तसत्यकामत्वेन[1] खलु. 'सत्यकामत्वं नाम सान्दीपनिपुत्रानयनवत्सकलापेक्षितपूरण'मिति मध्यवीथिभट्टार्य्यैस्तत्त्वत्रयविवरणे उक्तम्.

तेषां ध्रुवपदवत्प्रागविद्यमानमपि कल्पयित्वेति, इदं सत्यसङ्कल्पत्वकार्य्यम्.यथोत्तानपादपुत्रस्य ध्रुवस्य स्वर्गस्योर्द्ध्वविधावऽपूर्वमेकम्पदं कल्पयित्वा ऽदा, त्तथाश्रितार्थे प्रागविद्यमानस्य कल्पनमपूर्वभोग्यरचनोपयोग्यऽमोघसत्यसङ्कल्पत्वादेव हि. सत्यसङ्कल्पत्वं नाम ध्रुवपदवत् पूर्वमविद्यमानस्यापि[2] रचनासामर्थ्यमितीदमपि भट्टार्य्यैरुक्तम् .

स्वस्यस्वस्य स्वं स्वेनस्वेन विनियुज्यत इति यथा ज्ञायते तथात्मानमात्मीयानि च वितीर्य्येति, इदमौदार्यकार्य्यम् . वरद सकलमेतत्संश्रितार्थं चकर्थेत्युक्तप्रकारेण स्वस्वपदार्थाः स्वेन [स्वेन] यथा विनियुज्यन्त, तथा विनियोजयितुमात्मात्मीयानामाश्रितेभ्यो दानं अददा[3]मिति हृदये किञ्चिदभिमानाभावेन स्वीकुर्वातां प्रत्युपकारमन्विष्य तदलाभेन व्याकुलीभवति[4] परमोदारत्वादेव.

तेषां कार्य्येषु निर्वृत्तेषु स्वयं कृतकृत्य इति, इदं कृतित्वकार्य्यम्. आश्रितकार्य्ये निर्वृत्ते तेषां कृतकृत्यतौचित्यात् . तथा ऽभिषिच्य च लङ्कायांमित्यादिप्रकारेण स्वयं कृतकृत्यो भवति. आश्रितसंरक्षणे सिद्धे स्वस्य फलित्वरूपस्वभावेन कृतित्वं नामाश्रितापेक्षिते पूर्णे स्वयं कृतकृत्यत्वमिति भट्टार्य्यः .

स्वकृतं शुभमेकमप्यविचिन्त्य तेषां सुकृतलवमेव विचिन्त्येति, इदं कृतज्ञताकार्यम् स्वविषये किञ्चिच्छरणोक्तिप्रभृतिसुकृतलेशे

---

(१) सत्यत्वकामत्वेनेति पु. पा. ।

(२) ध्रुवपदवदपूर्वमाविद्यमानस्यापीति पु. पा. ।

(३) अददमिति पु. पा. ।

(४) व्याकुलीभवादीति पु. पा. ।

कृते तेषां सर्वेषु शुभेषु स्वेनकृतेष्वपि तत्र किंचिदप्यस्मरन् तत्कृत-
सुकृतलेशमेव स्मरति कृतज्ञत्वादेव हि. 'कृतज्ञता नामाश्रितसुकृत-
लवस्मरणेन स्वकृतोपकाराणामदर्शन'मिति भट्टार्य्यः.

अनादिकालं वासिता अपि रसाः सर्वे विस्मर्य्यन्ते यथा स-
र्वदा स्वयंभोग्य इति, इदं माधुर्य्यकार्य्यम्. अनादिकालमारभ्य वा-
सितानां प्राकृतरसानां यथा विस्मरणं स्या त्तथा, सर्वावस्थाया-
मपि भोग्यत्वं सर्वरस इत्युक्तनिरतिशयभोग्यत्वेनैव खलु.

भार्य्यापुत्रादिदोषान् दृश्यमानानप्यऽपश्यन् वर्तमानः पुरुष इव
तेषां दोषान् हृदयेनास्मरन्निति, इदञ्चातुर्य्यकार्य्यम्. भार्य्यापु-
त्रादिभिस्सह वर्त्तमानः कश्चित्पुरुषस्तत्कृतापराधान् दृष्ट्वापि हृदये-
नास्मरंस्तिष्ठति. आश्रितदोषाणामविदर्शनमाच्छादने चतुरत्वात्.

दोषेषु महालक्ष्म्या प्रदर्शितेष्वपि तस्याः प्रतिद्वन्द्वीभूय दृढः सन्
रक्षित्वेति इदं स्थैर्य्यकार्यम्. स्वस्यात्यन्ताभिमतया चेतनापराधान्
क्षमापयन्त्या पुरुषकारभूतया श्रीमहालक्ष्म्या दोषेषु प्रदर्शितेष्वपि
मम दासा एवन्न कुर्य्युः, कुर्व्वन्ति चेत्सम्यक्कुर्व्वन्तीति तया विवा-
दङ्कृत्वा निश्चलस्सन् रक्षति स्थिरस्वभावत्वादेव.

कामिनीमालिन्यादरवान् कामुक इव तद्दोषान् भोग्यतया स्वी-
कुर्व्वन्निति. इदम्प्रणयित्वकार्य्यम्. कामिनीविषये प्रावण्येन तच्छरी-
रमालिन्ये आदरङ्कुर्व्वाणः कामुक इवाश्रितानाम्प्रकृतिसम्बन्धादिदो-
षानऽङ्गीकरोति परमप्रणयित्वादेव.

तेषु करणत्रयेणापि ऋजुरिति. इदमार्जवकार्य्यम्. मनोवाक्कायेषु
त्रिष्वार्जवशून्येषु तेषु जलवहनाशक्यमुन्नतप्रदेशमुपायेन जलम्प्रापय-
न्निवात्मानमधीनङ्कृत्वा त्रिविधकरणेनाप्यृजुर्भवत्यृजुस्वभावेनैव.

विश्लेषे तेषांव्यसनङ्गोष्पदं यथा भवति तथा स्वयमवसन्न इति,
इदम्मार्दवकार्य्यम्. ऊर्द्धम्मासान्न जीविष्य इत्युक्तेर्न जीवेयं क्षणम-
पीत्युक्तप्रकारेण स्वविश्लेष आश्रितैरनुभूयमानं व्यसनं समुद्रतुल्य-
व्यसनस्यैक्यङ्गोष्पदमेव यथा स्या, त्तथा स्वयं क्लिश्यति आश्रित-
विरहासहिष्णुत्वरूपमार्द्दवेन.

तेषां यथेष्टं स्वात्मनमधीनं कृत्वेति, इदं सौशील्यकार्य्यम्. जन्मा-
दिभिर्निकृष्टानां तेषामानुकूल्येन सर्वोत्कृष्टस्य स्वस्य तदाधीन्यं शील-
वत्त्वादेव.

तेषां बन्धनताडनादियोग्यतया सुलभ इति, इदं सौलभ्यकार्य्यम्. अवतारदशायां नवनीतचौर्य्यादिव्याजेन यशोदादीनां बन्धनताडनाद्यर्हः सुलभो भवति सौलभ्यस्वभावेन खलु.

यथा सद्योजाते वत्से प्रीत्या माता प्रथमवत्सं ग्रासं दातुमागतानपि विषाणखुरयोः करोति तथा महालक्ष्मीं नित्यसूरिंश्च त्यक्त्वा स्नेहं कुर्वंस्तिष्ठतीति इदं वात्सल्यकार्य्यम्. सद्यः स्वस्मादुत्पन्नेव वत्से माता गौः प्रीतिं कृत्वा प्राक्स्वस्नेहविषयं प्रथमवत्सं स्वभोग्यं ग्रासं दातुमागतानपि क्रोधेन विषाणे करोति खुरेण ताडयति, तथा परिरम्भणादिभोग्योपकारिकां महालक्ष्मीं प्राक्स्नेहविषयीभूतान्नित्यसूरींश्च विहाय सद्य आश्रितेषु स्नेहं करोति वत्सलत्वादेव. एवं ज्ञानशक्त्यादिकल्याणगुणविभूषित इत्युक्तं विस्तरेणोपपादितवान् ।

अथ सकलजगत्सर्गस्थितिसंहारकर्त्तेत्युक्तं विस्तरेणोपपादयितुमुपक्रमते

अयमेवेत्यादिना .

## अयमेव सकलजगत्कारणभूतः.

अयमिति पूर्वोक्तविलक्षणस्वरूपगुणविशिष्ट ईश्वरः परामृश्यते. अवधारणेन जगत्कारणस्यान्ययोगो व्यवच्छिद्यते. वेदान्ते सदेव सोम्येदमग्र आसीदिति च्छान्दोग्ये, ब्रह्म वा इदमेकमेवाग्र आसीदिति वाजसनेयके, आत्मा वा इदमेक एवाग्र आसीदिति तैत्तिरीयके च सद्ब्रह्मात्मस्वरूपसामान्यशब्दैरभिधीयमानं कारणवस्तु किमित्याकाऽऽङ्क्षायां गतिसामान्यन्यायेन एको ह वै नारायण आसीदिति महोपनिषदि विशेषितो नारायण एव जगत्कारणभूत इति निर्णयकरणेन परमवैदिकत्वादयमेवेति सावधारणमाह.

सकलेजगत्कारणभूतइति, समष्टिव्यष्टिरूपाणां सर्वेषां जगतां कारणभूत इत्यर्थः. अनेनसमन्वयाविरोधसाधनफलरूपार्थचतुष्टयप्रतिपादिकायामुत्तरमीमांसायामध्यायचतुष्टयमध्ये अथातो ब्रह्मजिज्ञासेति जिज्ञास्यतया विहितस्य ब्रह्मणो लक्षणतया जन्माद्यस्य यत इति जगत्कारणत्वमुक्त्वा तस्या ऽयोगान्ययोगव्यवच्छेदेन जगत्कारणवस्तुप्रतिपादकानां सकलवेदान्तवाक्यानां ब्रह्मणि समन्वयं प्रतिपादयता प्रथमाध्यायस्यार्थः प्रतिपादितः .

अविरोधप्रतिपादकद्वितीयाध्यायप्रकारेण ब्रह्मकारणत्वविरोधपर-माणुकारणत्ववादिनो निराकरोति

**केचित्परमाणुं कारणं वदन्ति, परमाणौ प्रमाणाभा-वाच्छ्रुतिविरोधाच्च न सम्भवति ।**

केचिदित्यादिना . केचिदित्यनेन बौद्धार्हतवैशेषिका उच्यन्ते. तत्र बौद्धार्हतयोः केवलपरमाणुरेव[1] जगत्कारणमिति मतम्. वैशे-षिकादीनां परमाणुरुपादानकारणमानुमानिकेश्वरो निमित्तकारण-मिति मतम्. तत्र बौद्धवैशेषिकादयः पार्थिवाप्यतैजसवायवीयान् चतुर्विधान् परमाणूनभ्युपगच्छन्ति. आर्हतास्त्वेकरूपानऽभ्युपगच्छ-न्ति. एवङ्केषाञ्चिद्विशेषाणां सत्वे ऽपि सर्वेषाम्परमाणुकारणत्वा-ङ्गीकारे विशेषाभावात् केचिदिति तन्त्रेणोपात्ताः. एते महीधरा-दिसकलकार्य्याणामपि परमाणुपरिणामत्वं वदन्ति . तत्पक्षन्निराक-रोति परमाणावित्यादिना . जगत्कारणतयाङ्गीकृतानां परमाणूनां प्रत्यक्षेणासिद्धेरागमेनासिद्धेश्च अनुमानेन साधनमपि न सम्भवति, आगमविरुद्धार्थस्य साधनायोगात् . तथाचानुमानेनाप्यसिद्धेः परमाणुसद्भाव एव प्रमाणं नास्ति. किञ्चेश्वरस्य जगत्कारण-त्वप्रतिपादकश्रुतिविरोधात् परमाणूनां जगत्कारणत्वन्न सम्भवती-ति भावः.

अथ जगतः प्रकृतिः स्वतन्त्रकारणमिति कापिलमतन्निराकर्तुं तदुत्क्षिपति

**कापिलाः प्रधानङ्कारणमित्याहुः. प्रधानस्या ऽचेतनत्वादीश्वरानधिष्ठाने परिणामासम्भवात्सृष्टि-स्थितिसंहारव्यवस्थानुपपत्तेस्तदपि न युक्तम्म्.**

---

(१) परमाण्वेवेति पु. पा. ।

कापिला इत्यादिना.

कापिलाः कपिलमतनिष्ठाः सांख्या मृद्ात्मकस्य घटस्य मृद्द्रव्यं यथा कारणं भवति तथा सत्त्वरजस्तमोमयस्य सुखदुःखमोहात्मकस्य जगतो गुणत्रयसाम्यरूपं प्रधानमेव स्वरूपं कारणम् यथा दधिभावेन परिणमतः पयसोऽनन्यापेक्षमाऽऽद्यपरिस्पन्दप्रभृतिपरिणामपरंपराः स्वत एव भवन्ति, यथा च मेघविमुक्तस्यैकरसस्य जलस्य नारिकेलतालचूतकपित्थनिम्बतिन्तिड्यादिविचित्ररसरूपेण परिणामप्रवृत्तिर्दृश्यते, तथा परिणामस्वभावस्य प्रतिसर्गावस्थायां सदृशपरिणामतया स्थितस्य प्रधानस्य अनन्याधिष्ठितस्यैव सर्गावस्थायां गुणवैषम्यनिमित्तो विचित्र[1] परिणामः सम्भवति. अतः प्रकृतिरेव स्वतन्त्रकारण[2]मिति ते वदन्ति तन्मतन्निराकरोति प्रधानस्येत्यादिना. विचित्रजगदाकारेण परिणामे एवं परिणामे इति सङ्कल्पहेतुचैतन्यशून्यवस्तुत्वात्प्रधानस्य

प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥

इत्युक्तप्रकारेणेश्वराधिष्ठानमन्तरा परिणामासम्भवात्. तदधिष्ठानमन्तरा परिणमते चेत्, सर्वकालमपि सृष्टेरापत्तेः संहारानुपपत्तेः. कालभेदेन भवत्सृष्टिसंहारव्यवस्थानुपपत्तेश्च प्रधानं कारण मिति मतमनुपपन्नमित्यर्थः. अत्रा'पि'शब्दःपूर्वोक्तपरमाणुकारणत्वसमुच्चायकः. अचेतनस्य प्रधानस्य जगत्कारणत्वमङ्गीकुर्वतां पक्षन्निराकृत्यचेतनस्य जगत्कारणत्वमङ्गीकुर्वत्पाशुपतादिमतं निराकरोति

## चेतनोपि न कारणम्, कर्मपरतन्त्रत्वाद्दुःखित्वाच्च.

चेतनोपीत्यादिना. अपिशब्दः पूर्वोक्ताचेतनसमुच्चायकः. आगमसिद्धेश्वरो निमित्तकारणम्, आनुमानिकेश्वरो निमित्तकारणमिति

(१) निमित्ताविचित्रेति पु. पा. ।

(२) अतः प्रकृतिरेकस्वतन्त्रस्वकारणमिति पु. पा. ।

च पाशुपतवैशेषिकादिभिरभिधीयमानो रुद्रश्चेतनेष्वन्यतमः खलु, हिरण्यगर्भः समवर्त्तताग्र इत्यादिवाक्यान्यवलम्ब्य चेतनेष्वन्यतमो ब्रह्मा जगत्कारणमित्यपि केचिद्वदन्ति,तत्सर्वमभिप्रेत्य चेतन इति साधारणशब्देनोक्तम्. न कारणमिति कारणं भवितुं न शक्त इत्यर्थः.

कुत इत्याकाङ्क्षायामाह कर्मपरतन्त्रत्वादिति. आरभ्य यथा संकुचितज्ञानः सन् स्वेच्छाप्रकारेण किंचिदपि कर्त्तुं न क्षम,स्तथा कर्माधीनत्वादऽनादित्वेन जगद्व्यापारे ऽवगाहनस्य यथा योग्यता न स्या,त्तथा दुःखित्वाच्चेत्यर्थः.अपहतपाप्मेत्युक्तप्रकारेणाऽकर्मवश्य-स्यानन्दमय इत्युक्तप्रकारेण निरतिशयानन्दयुक्तस्य खल्वप्रतिहत-ज्ञानशक्तिकत्वेन[1] मनःप्रीत्या कर्त्तव्यो जगद्व्यापार उपपद्यते.

ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा ।
विष्णोर्मायामहावर्त्तमोहान्धतमसाऽऽवृताः ॥
आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्त्तिनः ॥

इत्युक्तप्रकारेण कर्मवश्यानां

ततः क्रोधपरीतेन संरक्तनयनेन च ।
वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरो मया ॥
यस्मादनपराधस्य शिरश्छिन्नं त्वया मम ।
तस्माच्छापसमाविष्टः कपाली त्वम्भविष्यसि ॥

इत्युक्तप्रकारेण मस्तकं छिनत्ति मस्तके छिद्यत इत्येवं दुःखि-तानां च जगत्सृष्ट्यादिव्यापारो नोपपद्यते.

एवं विरोधपरिहारं कृत्वा प्रतिज्ञानुगुणं निगमयति

**तस्मादीश्वर एव सकलजगत्कारणम्.**

तस्मादित्यादिना. तस्माच्चेतनाचेतनयोरुभयोरपि कारणत्वा-संभवाल्लोके ऽविद्याकर्मनिबन्धनस्य परनियोगनिबन्धनस्य चाका-रणत्वस्य दर्शनात्तन्निरस्या ऽस्य कारणत्वे हेतुमाह

**अयं कारणं भवति, नाऽविद्याकर्म्मपरनियो-गादिभि, रपि तु स्वेच्छया.**

(१) शक्तिकेनेति पु. पा. ।

अयं कारणमित्यादिना. अविद्याकर्मनिबन्धनं कारणत्वं सकलजन्तुसाधारणम् लोके परस्परोत्पादकतया ऽऽगतं कारणत्वं वैषयिकसुखप्रावण्येन हेतुना ऽज्ञानेन च. तत्र शास्त्रवश्यानामुत्पादकत्वं कर्मप्रधानम्भवति, अन्येषामविद्याप्रधानम्. तदुभयमपि मिथो न व्यभिचरति. अधिकारिपुरुषाणां ब्रह्मादीनां कारणत्वं परनियोगप्रधानम्,

प्राजापत्यं त्वया कर्म पूर्वम्मयि निवेशितम् ।
एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥

इत्यादावविदन्द्रष्टव्यम्. आदिशब्देनास्य विवक्षितो ऽवर्जनीयो भोग[1] इति मध्यवीथीभट्टार्य्यो ऽवदत्.

अयं सृष्ट्यादिव्यापार ईश्वरस्य किमविद्याकर्मनिबन्धनः, किं वा ऽवर्जनीयः कश्चिद्रोगो, ऽथ वा परप्रेरितः सन्करोतीति तच्छङ्कावाक्यम् स्वेच्छयेति, निरवद्यं निरञ्जनम्, अपहतपाप्मा, न तस्येशे कश्चनेत्युक्तप्रकारेणाविद्यादिदोषप्रतिभटस्य[2] नियामकान्तरशून्यस्य तस्य स्वेच्छाभिन्नं कारणं नास्तीति भावः.

अचिदविशेषितान्प्रलयसीमनि संसरतः
करणकलेवरैर्घटयितुं दयमानमनाः ।
वरद निजेच्छयैव परवानकरोः प्रकृतिं
महदभिमानभूतकरणावलिकोरकिणीम् ॥
प्रलयसमयसुप्तं स्वं शरीरै[3]कदेशं
वरद चिदचिदाख्यं स्वेच्छया विस्तृणानः ।
खचितमिव कलापं[4] चित्रमातत्य धुन्वन्न्ऽनुशिखिनि शिखीव क्रीडसि श्रीसमक्षम् ॥

---

(१) विवक्षितो वर्जनीयो रोग इति पु. पा. ।

(२) प्रतिभट्टस्येति पु. पा. ।

(३) प्रलयसमये सुप्तं स्वशरीरेति पुस्तकगतः पाठश्छन्दोभङ्गवाल्लेखकप्रमादकृतः ।

(४) कलायमिति पु. पा. ।

इति भट्टार्य्यैरभिहितम् .

नन्वेवमयमिच्छाप्रयुक्तोऽप्यायासरूपः किमित्यत आह

## संकल्पेन करणादऽयमायासशून्यः.

संकल्पेनेति. यत्नरूपकायिकव्यापारेण न करोति किन्त्वयत्नरूपमानसव्यापारात्मकसंकल्पेन. अतो ऽयं जगत्सृष्ट्यादिव्यापारस्तस्याऽ नायास[1] इत्यर्थः. सो ऽकामयत बहु स्यां प्रजायेयेति

मनसैव जगत्सृष्टिं संहारं च करोति यः ।
तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ॥

इत्यादि.

नन्वनायासरूपत्वेपि अवाप्तसमस्तकामतया परिपूर्णस्य तस्यानेन व्यापारेण किं प्रयोजनमित्यत आह

## अस्य प्रयोजनं केवललीला.

अस्य प्रयोजनमिति. अस्य जगत्सृष्ट्यादिरूपव्यापारस्य प्रयोजनं केवललीलेत्यर्थः. लीला नाम तादात्विकरसं विना कालान्तरभाविफलमनुद्दिश्य क्रियमाणो व्यापारः. तथाहि[2] अस्य प्रयोजनमिति सृष्टिरूपव्यापारस्य प्रयोजनाभिधानात् तादात्विकरसमात्रमेवोक्तम्. अयं सृष्टिरूपो व्यापारः सार्वभौमानां द्यूतादिवत् बालानां वालुकागृहादिवच्च तादात्विकरसकरः खलु. अनेन लोकवत्तु लीलाकैवल्यमितिसूत्रार्थो ऽभिहितः.

क्रीडतो बालकस्येव चेष्टास्तस्य निशामयेति

भगवता श्रीपराशरेण

अप्रमेयो ऽनियोज्यश्च यत्र कामगमो वशी ।
मोदते भगवान्भूतैर्बालः क्रीडनकैरिवेति ॥

भगवता श्रीवेदव्यासेनाभियुक्तैरप्य स्येश्वरस्य जगद्व्यापारस्य प्रयोजनं लीलैवेत्युक्तम्.

---

(१) बहुव्रीहिविशेषणमिदम्, अनायाससिद्ध इत्यर्थः ।
(२) तथापीति पु. पा. ।

ननु तर्हि गत्वागत्वापि दृष्ट्वा जन्म निवर्त्तयितुं विचार्यविचार्य लोकमसृजत् उज्जीवनार्थं लोकमसृजदिति,

विचित्रा देहसंपत्तिरीश्वराय निवेदितुम् ।
पूर्वमेव कृता ब्रह्मन्हस्तपादादिसंयुतेति च
अचिदविशेषिता[1]न्प्रलयसीमनि संसरतः
करणकलेवरैर्घटयितुं दयमानमनाः ।

इति च चेतनानामुज्जीवनरूपप्रयोजनसिद्ध्यर्थं जगत्सृष्टिमकरोदिति वदतां वचनानां वैयर्थ्यापत्तिरिति चेन्न, तथाहि,उभयोः प्रयोजनयोः सत्वेपि लीलैव प्रयोजनमित्यभिधानं प्राचुर्यमभिप्रेत्य. तस्मात्

रूपप्रकारपरिणामकृतव्यवस्थं
विश्वं विपर्ययितुमन्यदसच्च कर्त्तुम् ।
क्षाम्यन्स्वभावनियमं किमुदीक्षसे त्वं
स्वातन्त्र्यमैश्वरमपर्यनुयोज्यमाहुः ॥

इत्युक्तप्रकारेण यथेच्छं कर्त्तुं शक्तत्वात्सकलात्मनोपि युगपदेव मुक्तान्कर्त्तुं समर्थत्वेपि स्वाधीनस्वरूपस्थित्यादिनात्मनः कर्म व्याजीकृत्य दूरीकृत्य शास्त्रमर्यादया तानङ्गीकुर्यामित्थं स्थिति[2]लीलारसेच्छयैव. लीलाविभूतिरित्येवास्य निरूपकम्. अत एवैतद्विभूतेर्लीलायाः प्रचुरप्रयोजनत्वात् सूत्रकारादिभिः सर्वैर्लीलायाः प्रयोजनत्वाभिधानादयमपि[3] केवललीलैवेति वदति.

नन्वेवं जगत्सृष्ट्यादिव्यापाराणां केवललीलार्थत्वे संहारदशायां लीलाविरामः स्यादित्याशङ्कामनुवदति

## तर्हि संहारदशायां लीला विरमेत्,

तर्हि संहारदशायामित्यादिना. तत्परिहरति

## संहारस्यापि लीलात्वान्न विरमेत्.

---

(१) अवशेषितानिति अत्र पु. पा. ।
(२) इत्यास्थितिरिति पु. पा. ।
(३) अयमेवेति पु. पा. ।

संहारस्यापीत्यादिना. यथा गृहं निर्माय क्रीडतो बालस्य निर्मितगृहस्य विनाशनमपि लीला भवति, तथैतेषां संहारोपि सृष्टिवल्लीला. तस्मात्तदानीमपि लीलाविरामो नास्तीत्यर्थः. "अखिलभुवनजन्मस्थेमभङ्गादिलील" इति, "निखिलजगदुदयविभवलयलील" इति च सृष्टिवत्संहारोपि तस्य लीलेत्यभिहितं भाष्यकारैः.

एवमेतावता ईश्वर एव जगतः करणम्, तस्य कारणत्वं हेत्वन्तरेण न भवति, किन्तु स्वेच्छयेति संकल्पमात्रक्लृप्तत्वादयमनायासरूप इति, अस्य प्रयोजनं लीलेति चोक्तम्.

अथास्य जगत्प्रति कारणत्वं घटपटादिकं प्रति कुलालादीनां कारणत्वमिव निमित्तत्वमात्रं किमित्याशङ्कायामुपादानकारणमप्ययमेवेत्याह

## अयं च स्वयमेव जगद्रूपेण परिणतत्वादुपादानं च भवति.

अयं चेत्यादिना. लोके कार्योत्पत्तौ कारणं निमित्तोपादानसहकारिरूपेण त्रिविधम्. तत्तन्निमित्तकारणमुपादानं वस्तु कार्यरूपेण परिणमयत्कर्तृवस्तु, उपादानकारणं कार्यरूपेण परिणामयोग्यं वस्तु, सहकारिकारणं कार्योत्पत्त्युपकरणं वस्तु. घटपटादीनां कुलालकुविन्दादयो निमित्तकारणं, मृत्तन्त्वादय उपादानकरणं, दण्डचक्रवेमादयः सहकारिकारणम्.

प्रकृते जगद्रूपकार्योत्पत्तावीश्वर एव त्रिविधकारणं भवति. तथाहि, बहु स्यामिति संकल्पविशिष्टो निमित्तकारणम्, नामरूपविभागानर्हतया स्वविशेषणीभूतसूक्ष्मचिदचिद्विशिष्टस्सन्नुपादानकरणं, ज्ञानशक्त्यादिविशिष्टः सन् सहकारिकारणं च भवति. तस्मादुपादानकारणं चायमेवेति वदति. अयमिति पूर्वं निमित्तकारणतया ऽभिहित ईश्वरः परामृश्यते. चिदचितोरुभयोश्चापृथक्सिद्धविशेषणतया स्वयमेवेतिशब्देन्तर्भूतत्वात्स्वयमेव जगद्रूपेण परिणतत्वादित्युक्तम्. उपादानं चेति चकारेण पूर्वोक्तनिमित्तकारणत्वेनोपादानकारणत्वं समुच्चीयते.

तथाच ब्रह्मणो जगत्कारणत्वप्रतिपादकवेदान्तसूत्रे निमित्तकारणत्वसाधनानन्तरं "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा" दिति यथोपादानकारणत्वमुक्तम्, तथानेनाप्युक्तम्. प्रकृतिश्चेत्येतदभिप्रेत्यायमप्युपादानं चेत्यवादीत्. तत्र प्रतिज्ञादृष्टान्तानुपरोधादिति साध्यकथनपूर्वकं साधनमुक्तम्. अत्र स्वयमेव जगद्रूपेण परिणतत्वादिति साधनपूर्वकं साध्यमुक्तम्. तत्र येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यादित्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञया यथा सोम्यै[1]केन मृत्पिण्डेन सर्वं मृन्मयं[2] विज्ञातं स्यादित्युपपादकदृष्टान्तेन चैकवस्तुपरिणामरूपं जगदित्युक्तम् तच्चैकवस्तु सूक्ष्मचिदचिद्विशिष्टं ब्रह्म, तदेवा'यं स्वयमेवे'तिशब्देनावदत् तस्मात्सूत्रार्थ एवायमित्यविरोधः.

एकमेवाद्वितीयम्, तदात्मानं स्वयमकुरुत,

स्रष्टा सृजति चात्मानं विष्णुः पाल्यं च पाति च।
उपसंह्रियते चोप[3] संहर्त्ता च स्वयं हरिः॥
स एव सृज्यः स च सर्गकर्त्ता स एव पात्यत्ति च पाल्यते च।
ब्रह्माद्यवस्थाभिरशेषमूर्त्तिर्विष्णुर्वरिष्ठो वरदो वरेण्यः॥

इत्यादिभिर्निमित्तोपादानयोरैक्यं श्रुतिस्मृतिभिः सुव्यक्तमभिहितम्.

नन्वेवं स्वयमेव जगद्रूपेण परिणमते चे"न्निर्गुणं निरञ्जनं, निष्कलं निष्क्रियं शान्तं, सत्यं ज्ञानमनन्तं ब्रह्म, अविकाराय शुद्धाये" त्यऽभिधीयमानं निर्विकारत्वमस्य कथमुपपद्यत इति शङ्कामनुवदति

**तर्हि निर्विकारत्वं कथमिति चेत्, स्वरूपस्य विकाराभावान्न निर्विकारत्वविरोधः.**

---

(१) सौम्येति पु. पा.।
(२) मृण्मयमिति पु. पा.।
(३) चोप–इति पु. नास्ति।

तर्हीत्यादिना. तां परिहरति स्वरूपस्येत्यादिना. चिदचिद्रूपविशेषणविशिष्टस्य स्वस्य जगद्रूपेण परिणामे विशेष्यस्य स्वरूपस्य विकाराभावान्निर्विकारत्वस्य विरोधो नास्तीत्यर्थः.

स्वरूपस्य विकाराभावे[1] ऽयमेव जगद्रूपेण परिणमत इत्युक्तः परिणामो ऽस्य कथमुपपद्यत इति शङ्कामनुवदति

## तर्हि परिणामः कथमुपपद्यत इति चेत्,

तर्हीत्यादिना. [तां परिहरति][2]

## विशिष्टविशेषणसद्वारकः कस्यचित्कीटस्य स्वभावः सर्वशक्तेर्न नोपपद्यते.

[विशिष्टेत्यादिना. ][2] विशिष्टं च तद्विशेषणं विशिष्टविशेषणमिति प्रथमं कर्मधारयसमासं कृत्वा द्वारेण सह वर्तत इति सद्वारक इति अनन्तरपदस्य बहुव्रीहिं कृत्वा विशिष्टविशेषणेन सद्वारको विशिष्टविशेषणसद्वारक इति तृतीयातत्पुरुषसमासेन शब्दो व्युत्पादनीयः. विशिष्टं विशेषणयुक्तं विशिष्टम् विशेषणमिति दण्डकुण्डलादिविलक्षणं शरीरभूततया पृथक्स्थित्याद्यनर्हं विशेषणयुक्तं चिदचिद्रूपविशेषणमुच्यते.

अथ वा, विशिष्टविशेषणमित्यस्य शरीरभूतं सत् सर्वदा विशेषणत्वेन सङ्गतं विशेषणमित्यर्थः. तदापि पृथक्स्थित्याद्यर्हेभ्यो दण्डकुण्डलादिभ्यो व्यावृत्तिः सिद्ध्यति विशेषणेन सद्वारक इति. एवमपृथक्सिद्धविशेषणेन हेतुना द्वारसहितो ऽस्य परिणामो ऽस्तीत्यर्थः. अनेनाऽपृथक्[3]सिद्धचिदचिद्रूपविशेषणद्वारा ऽस्य परिणामो ऽस्तीत्युक्तम्.

नन्वेवं स्वरूपस्य विकाराभावे स्वशरीरभूतविशेषणद्वारा सर्वस्य कार्यजातस्या[4]यमुपादानं कथं भवतीत्यत आह कस्यचित्कीट-

---

(१) विकारभावे इति पु. पा. ।

(२) [ ] एतच्चिह्नमध्यगतः पाठः पुस्तके नास्ति ।

(३) अनेन पृथगिति पु. पा. ।

(४) कार्यस्य जातस्येति पु. पा. ।

स्येत्यादि. अल्पशक्तिकस्य कीटस्य स्वरूपविकाराभावेपि स्वशरीरभूतविशेषणमुखेन तन्तुजालरूपकार्य्यं प्रति स्वयमुपादानत्वरूपस्वभावः, "परास्य शक्तिर्विविधैव श्रूयते" इत्यधीयमानसर्वशक्तेः[1] नोपपद्यत इति न युक्तम्. "यथोर्णनाभिः सृजते गृह्णते च,

ऊर्णनाभिर्यथा सृष्ट्वा स्वयं तद्ग्रसते पुनः ।
तथा सृष्ट्वेदमखिलं स्वयं तद्ग्रसते हरिः ॥

इत्यादि.

कार्य्ये ऽनन्ते स्वतनुमुखतस्त्वामुपादानमाहुः
सा ते शक्तिः सुकरमितरच्चेति वेलां विलङ्घ्य ।
इच्छा यावद्विहरति सदा रङ्गराजाऽनपेक्षा
सैवेशाना ह्यतिशयकरी सोर्णनाभौ विभाव्या ॥

इति भट्टार्या आहुः.

एवं निमित्तोपादानकारणत्वे उक्त्वा सहकारिकारणत्वस्यानभिधानं सर्वज्ञत्वादिगुणयोगस्य प्रागभिहितत्वात् निमित्तोपादानयोरैक्याभिधानाच्च स्वत एव सिद्ध्यतीत्यभिप्रायेण. अत एव वेदान्तसूत्रेप्यस्य विशिष्यानभिधानम्. एवमीश्वर एव त्रिविधकारणमिति साधितवान्. अथा "ऽजामेकाम्, गौरनाद्यन्तवती, त्रिगुणन्तज्जगद्योनिरनादिप्रभवाप्ययम्, अजो ह्येकः, ज्ञाज्ञौ द्वावजावीशानीशौ, अजो नित्यः शाश्वतो ऽयं पुराणः" इत्यादिश्रुतिस्मृत्यादिपूक्तप्रकारेण नित्ययोश्चिदचितोरीश्वरेण क्रियमाणा सृष्टिः कीदृशीत्याकाङ्क्षायामाह

## ईश्वरस्य सृष्टिरऽचितः परिणामकरणं, चेतनस्य शरीरेन्द्रियप्रदानज्ञानाविकासकरणञ्च ।

ईश्वरस्येत्यादिना.

प्राग् जगत्कारणत्वेनाभिहितेनेश्वरेण चेतनाचेतनात्मकस्य जगतः सृष्टिर्नाम तमः परे देव एकीभवतीत्युक्तप्रकारेण स्वस्मादविभक्ततया स्थितस्य तमःशब्दवाच्यस्यास्य

---

(१) अधीयमानस्य सर्वशक्तेरिति पु. पा. ।

ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमानुदः ॥

इत्युक्तप्रकारेण स्वप्रेरणविशेषेण स्वस्माद्विभागं कृत्वा तस्य व्यक्तशब्दवाच्यसमष्टिव्यष्टिरूपसमस्तकार्य्यात्मकपरिणामकरणम्. अचिदविशेषितान्प्रलयसीमनि संसरत इत्युक्तप्रकारेण करणकलेवरविधुरस्य भोगमोक्षशून्यस्याचिदविशेषेण स्थितस्य चेतनस्य भोगस्थानं शरीरं भोगोपकरणानीन्द्रियाणि च दत्त्वा भोगमोक्षानर्हं यथा भवति, तथा प्राक्संकुचिततया स्थितस्य ज्ञानस्य विकासकरणं चेत्यर्थः. चेतनस्येति जात्येकवचनम् ॥

अथ स्थितिसंहारप्रकाराश्च वक्तव्या इति विचार्य्य प्रथमं स्थितिप्रकारमाह

**स्थितिकरणं नाम सृष्टेषु वस्तुषु केदारे जलवदऽनुकूलतया प्रविश्य सर्वरक्षणकरणम्.**

स्थितिकरणमित्यादिना. 'स्थितिर्नामे'त्यनभिधाय' स्थितिकरणं नामे'त्यभिधानं स्थितेः सृष्टिसंहारवत्कर्त्तृगतत्वाभावेन रक्षणकर्मीभवद्वस्तुगततया स्थितिकरणस्य कर्त्तृव्यापारत्वात्. सृष्टेष्वित्यादि. तत्सृष्ट्वेत्युक्तप्रकारेण स्वेन सृष्टेषु वस्तुषु केदारस्यैकतयाऽऽनुकूल्येन तिष्ठज्जलवत् तदेवानुप्राविशदित्युक्तप्रकारेण तद्रक्षणानुकूलतया ऽन्तः प्रविश्य तत्तद्वस्त्वनुगुणं सकलरक्षणानां करणमित्यर्थः अनुप्रविशच्छब्दस्यानु[1]कूलतया प्रवेशो ऽस्य विवक्षितः. तथाच स्थितिकरणं रक्षणकरणमिति सिद्धम् ।

अथ संहारप्रकारमाह

**संहारो नाम यथा ऽविनीतः पुत्रः पित्रा शृङ्खले बद्धा स्थाप्यते, तथा विषयान्तरेषु सक्तानीन्द्रियाणि संहृत्यावस्थापनम् ।**

---

(१) अनुप्रविशशब्दस्येति पु. पा., अनुप्रवेशशब्दस्येति वा पठनीयम् ।

संहारो नामेति. विचित्रां देहसंपत्तिरीश्वराय निवेदितुमित्युक्तप्रकारेण स्वसमाश्रयणं कृत्वोज्जीवनार्थं दत्तानि करणकलेवराण्यादाय मार्गमप्राप्य बाह्यविषयप्रावण्ये कुपथेन गन्तुमुद्युक्ते विधिनिषेधवश्यतया संकोचेन वर्त्तनं विना स्वैरचारिणं पुत्रं हितपरः पिता यथा शृङ्खलया बद्ध्वा किंचिद्व्यापारानर्हं स्थापयति, तथा स्वव्यतिरिक्तविषयेष्वतिप्रवणानि करणानि विनाश्य संकुचितं कृत्वाऽवस्थापनमित्यर्थः.

अथैतेषां सृष्ट्यादीनां चतुर्विधत्वात्तदपि दर्शयितुमाह

**एतत् त्रितयमपि प्रत्येकं चतुर्विधम्.**

एतत्त्रितयमपीत्यादि.

> चतुर्विभागः संसृष्टौ चतुर्द्धा संस्थितः स्थितौ ।
> प्रलयं च करोत्यन्ते चतुर्भेदो जनार्दनः ॥

इत्यादि.

**सृष्टौ ब्रह्मणः प्रजापतीनां कालस्य सर्वस्य जगतश्चान्तर्यामी सन् रजोगुणयुक्तः सृजति.**

सृष्टावित्यादि,सृष्टौ प्रसक्तायां चतुर्दशभुवनस्रष्टुः समष्टिपुरुषस्य ब्रह्मणस्तेन सृष्टानां नित्यसृष्टिकर्त्तृणां दशानां प्रजापतीनां सृष्ट्यपेक्षितस्य कालस्य परस्परमुत्पादकानां सर्वजन्तूनां च तत्तत्प्रवृत्तयः सर्वाः स्वस्मिन्यथा पर्यवस्यन्ति, तथाऽन्तरात्मा सन्प्रवृत्तिहेतुरजोगुणविशिष्टः सन् सृजतीत्यर्थः.

> एकनांशेन ब्रह्मासौ भवत्यव्यक्तमूर्तिमान् ।
> मरीचिमिश्राः पतयः प्रजानामन्यभागतः ॥
> कालस्तृतीयस्तस्यांशः सर्वभूतानि चापरः ।
> इत्थं चतुर्धा सन् सृष्टौ[1] वर्त्तते स रजोगुणः ॥

इत्यादि.

**स्थितौ विष्णवादिरूपेणावतीर्य्य मन्वादिमुखेन शास्त्रप्रवर्त्तनं कृत्वा सन्मार्गं दर्शयित्वा का-**

---

(१) संसृष्टाविति पु. पा. ।

**लस्य सर्वभूतानां चान्तर्यामी सन् सत्त्वगुणयुक्तः स्थापयति ।**

स्थितावित्यादि,स्थितौ प्रसक्तायां "मध्ये विरञ्चिगिरिशप्रथमावतार" इत्युक्तविष्ण्वतारप्रभृतीन् "सुरनरतिरश्चामवतर" न्नित्युक्तप्रकारेणानेकावतारान् कृत्वा "यद्वै किंचन मनुरवदत्तद्भेषज" मित्याप्ततयाश्रुतिप्रसिद्धमनुप्रभृतियाज्ञवल्क्यपराशरवाल्मीकिशौनकादिसुखेन स्मृतीतिहासपुराणरूपशास्त्राणि प्रवर्त्य[1] चेतनानामपथप्रवृत्तिं विनोज्जीवनं प्राप्तुं सन्मार्गान्दर्शयित्वा रक्षणोपयोगिनः कालस्य परस्पररक्षकाणां भूतानां च तत्तत्प्रवृत्तयो यथा स्वस्मिन्पर्य्यवस्यन्ति, तथा ऽन्तरात्मतया स्थितो ज्ञानप्रकाशादिहेतुसत्त्वगुणविशिष्टः स्थितिं करोतीत्यर्थः .

> एकांशेन स्थितो विष्णुः करोति परिपालनम् ।
> मन्वादिरूपी चान्येन कालरूपो ऽपरेण च ॥
> सर्वभूतेषु चान्येन संस्थितः कुरुते स्थितिम् ।
> सत्त्वं गुणं समाश्रित्य जगतः पुरुषोत्तमः ॥

इत्यादिपुराणे एकांशेन स्थितो विष्णुरिति विष्ण्ववतारस्यैकस्याभिधानमवतारान्तराणामप्युपलक्षणं द्रष्टव्यम्, विष्ण्वादिरूपेणावतीर्यैत्यनेनोक्तत्वात् .

**संहारे रुद्रस्याग्न्यादीनां कालस्य सकलभूतानामन्तर्यामी तमोगुणविशिष्टः संहरति.**

संहारइत्यादि. संहारे प्रसक्ते संहर्तृषु प्रधानस्य रुद्रस्या ऽवान्तरसंहर्तॄणामग्न्यन्तकादीनां संहारोपयोगिनः कालस्य परस्परनाशकानां सर्वभूतानां च तत्तत्प्रवृत्तयो यथा स्वस्मिन्पर्यवस्यन्ति तथान्तर्यामी सन्निर्दयं कर्तुमुपयुक्तेन तमोगुणेन युक्तः संहरतीत्यर्थः.

> आश्रित्य[2] तमसो वृत्तिमन्तकाले तथा प्रभुः ।

---

(१) प्रवर्त्तयित्वेति पुस्तकगतः पाठः प्रामादिकः ।

(२) आश्रितेति पु. पा. ।

रुद्रस्वरूपो भगवानेकांशेन भवत्यजः ॥
अग्न्यन्तकादिरूपेण भागेनान्येन वर्त्तते ।
कालस्वरूपो भागो ऽन्यः सर्वभूतानि चापरः ॥
विनाशं कुर्वतस्तस्य चतुर्द्धैव महात्मनः ।

इत्यादि. सृष्ट्यादिषु चतुर्विभागकथनस्थले ऽशशब्देन ब्रह्मादय उक्ताः, तेषां तस्य प्रकारभूतत्वादित्यमुमर्थमनन्तरम्

ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतः सृष्टिहेतवः ॥
विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज ।
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ॥
रुद्रः कालो ऽन्तकाद्याश्च समस्ताश्चैव जन्तवः ।
चतुर्द्धा प्रलये ह्येता जनार्दनविभूतयः ॥

इति श्लोकत्रयेण स्फुटतया प्रतिपादितवाञ् श्रीपराशरः. एतद्भिप्रेत्यैवायमप्यऽन्तर्यामीत्यवोचत्. "विष्णुर्मन्वादयः काल" इति श्लोके विष्णोरपि विभूतित्वाभिधानमवतारप्रयुक्तविग्रहपरम् ।

अथ विषमसृष्टिप्रयुक्तां मन्दमतीनां शङ्कां परिहर्तुं प्रथमं तद्विषयशङ्कामनुवदति

**कांश्चित्सुखिनः कांश्चिद्दुःखिनश्च सृजत ईश्वरस्य वैषम्यनैर्घृण्ये स्यातामिति चेत् ,**

कांश्चिदित्यादिना. सृष्टिकाले सकलात्मन एकप्रकारेण विना देवमनुष्यादिविभागेन कांश्चित्सुखिनः कांश्चिद्दुःखिनश्च सृजति चेत्सर्वसमस्य परमदयावत ईश्वरस्य सर्वविषये समत्वाभावरूपवैषम्यं दुःखितया सृष्टत्वात् परदुःखासहिष्णुत्वरूपकृपाया[1] अभावश्च स्यातामित्यर्थः.

तां परिहरति

---

(१) परदुःखासहित्वरूपा कृपाया इति पुस्तके प्रामादिकः पाठः ।

**कर्म हेतूकृत्य करणान्मृदं भक्षयन्त्याः प्रजाया जिह्वायां चिह्नं कृत्वा विभीषयन्मातृवद्धितपरेण करणाच्च न स्याताम् .**

कर्मेत्यादिना. केषांचित्सुखित्वेन केषांचिद्दुःखित्वेन च सृष्टेर्विषमसृष्टिहेतुभूतकर्म हेतूकृत्य करणाद्दुःखित्वेन सृष्टेः स्वस्य रोगकरीं मृदमादरेण भक्षयन्त्याः प्रजायाः पुनर्यथा न भक्षयेत्तथा जिह्वायां नखादिना चिह्नं कृत्वा मृद्भक्षणभयं कारयद्धितपरमातृवत् एते पुनश्च यथा दुःखहेतुकर्मकरणे बिभियु[1] स्तथा हितपरेण करणाच्च वैषम्यनैर्घृण्ययोरुभयोरपि नापत्तिरित्यर्थः. अनेन "वैषम्यनैर्घृण्ये न सापेक्षत्वा" दितिवेदान्तसूत्रार्थोऽभिहितः.

> निम्नोन्नतं च करुणं च जगद्विचित्रं
> कर्म व्यपेक्ष्य सृजतस्तव रङ्गशेषिन् ।
> वै[illegible]निर्घृणतयोर्न खलु प्रसक्ति-
> [illegible] इति [illegible]सूत्रसचिवाः श्रुतयो गृणन्ति ॥

इति [illegible]म्. एवं सकलजगत्सृष्टिस्थितिसंहारकर्तेत्युक्तमुपपादि[illegible] सत्त्वात्मक[illegible] इत्यर्थः. "[illegible]

अथ [illegible]देहव[illegible]दि[illegible]विग्रहयुक्त इत्युक्तमुपपादयितुमुपक्रमते

**अयं च त्रिविधजलयुक्तां पृथिवीं ससर्ज मेघवर्ण इत्युक्तप्रकारेण सविग्रहः सृष्ट्यादिकं करोतीत्यर्थः ।**

अयमित्यादिना. ननु मध्य उक्तयोरार्त्तादिचतुर्विधपुरुषसमाश्रयणीयत्वधर्मादिचतुर्विधफलप्रदत्वयोर्द्वयोरुपपादनं कुतो न कृतमिति चेन्न, "कारणं तु ध्येयः, यो ब्रह्माणं विदधाति पूर्व " मित्या-

(१) विभ्येयुरिति प्रामादिकः पु. पा. ।

युक्तप्रकारेण कारणवस्तुन एवोपास्यत्वादाश्रयणीयत्वाच्च कारणत्वोक्त्यैव चतुर्विधा भजन्ते मामित्युक्तं. चतुर्विधसमाश्रयणीयत्वम "फलमत उपपत्ते" रित्युक्तप्रकारेण फलप्रदत्वहेतुसर्वशक्तियोगस्य प्रागभिधानादेव चतुर्विधफलप्रदत्वम् चार्थादुक्तमित्यभिप्रायेण तयोरधिकस्योपपादनीयांशस्याभावाच्च तदुपपादनं न कृतम्.

तत्पूर्वोक्तकारणसत्त्वेन[1] विग्रहयोगस्यान्वयं वदन्नाह अयमिति. एवं जगत्सर्गादिकर्तृतया ऽभिहितो ऽयं नदीजलभूमिजलवर्षजलरूपत्रिविधजलविशिष्टजगत्स्रष्टा वर्षुकवलाहक[2]सदृशविग्रहविशिष्ट इति दिव्यसूरिप्रबन्धोक्तप्रकारेण विग्रहसहितः सन् सृष्टिस्थितिसंहारान्करोतीत्यर्थः. मेघवर्ण इत्यस्य सौन्दर्य्य[3]परतया बहुभिर्व्याख्यातत्वेपि विग्रहपरतयानेनाभिधानादियमप्येका योजना द्रष्टव्या. एकवाक्यस्यानेकयोजनास्ति खलु ।

अथैतद्विग्रहवैलक्षण्यमेकेन गद्येनाह

**विग्रहश्च स्वरूपगुणेभ्यो ऽत्यन्ताभिमतः स्वानुरूपो नित्य एकरूपः शुद्धसत्त्वात्मक[ग्रहप]तनदेहवज्ज्ञानमयस्य स्वरूपस्या ऽऽच्छादकः [प्रथम]न् माणिक्यमयपात्रे स्थापितसुवर्णवत्स्व[illegible]द्व्यात्मस्वरूपस्य प्रकाशको निरवधिकतेज[illegible]. सौकुमार्यादिकल्याणगुणगणनिधिर्योगिध्येयः सकलजगन्मोहनस्समस्तभोगवैराग्यजनको नित्यमुक्तानुभाव्यो वासनातटाकवत् सकलतापहरो ऽनन्ता-**

(१) कारणत्वेनेति पु. पा. ।
(२) वार्षुकवलाहकेति पु. पा.
(३) इत्यसौदार्येति पुस्तकगतः पाठः ।
(४) स्ववर्णरूपेति पु. पा. ।

**वतारकन्दं सर्वरक्षकः सर्वाऽपाश्रयो ऽस्त्रभूषणा-
भूषित[1]स्तिष्ठति.**

विग्रहश्चेदिना. स्वरूपगुणेभ्यो ऽत्यन्ताभिमत इति, इच्छागृ-
हीताभिमतोरुदेहस्व इत्यादि प्रमाणम्.

स्वानुरूप इति, अननुरूप[2]मप्यभिमतं भवति किंचित्, अयं तथा
न, अपि तु स्वस्यानुरूप इत्यर्थः.

नित्य इति, स्वरूपगुणवदऽनादिनिधन इत्यर्थः, लोके ऽवयविना-
म अनित्यत्वदर्शनादस्याप्यवयवित्वेनानित्यत्वं स्यादिति चेन्न, सर्व-
त्रावयवसंबन्धमात्रं न भवत्यऽ नित्यत्वे हेतुरपित्वऽवयवारब्धत्वम्,
अवयवसंबन्धमात्रस्यानित्यत्वे हेतुत्वे करचरणाद्यवयवसंबन्धवद
त्मनोप्यनित्यत्वापत्तेः. एवं चात्रावयवारब्धत्वे प्रमाणाभावात्कर-
चरणाद्यवयवयोगित्वेपि नित्य एव भवतीति विवरणे कृष्णपादै-
रुक्तम्.

एकरूप इति, वृद्धिक्षयादिविकाररहित इत्यर्थः. सदैकरूपरू-
पायेत्यादि.

शुद्धसत्त्वात्मक इति, गुणान्तरसंसर्गरहितसत्वाश्रयो ऽप्राकृत-
दिव्यरूप इत्यर्थः. "न तस्य प्राकृता मूर्त्ति"रित्यादि.

'चेतनदेहव'दित्यादि'स्वर्णरूपदिव्यात्मस्वरूपस्य प्रकाशक' इति,
शुद्धसत्त्वात्मकत्वाद्गुणत्रयाश्रयचेतनदेहवन्न ज्ञानमयत्वात्तेजोम-
यस्य स्वरूपस्य बहिःप्रकाशाच्छादन[3]मकुर्वन्माणिक्येन निर्मिते पा-
त्रे स्वर्णे स्थापिते ऽन्तःस्थितं स्वर्णं तद्यथा बहिः सम्यक् प्रकाशयति,
तथा स्वर्णस्वरूपेत्युक्तप्रकारेण स्पृहणीयत्वात्स्वर्णत्वेनाभिहितस्य
दिव्यात्मकस्वरूपस्य प्रकाशक इत्यर्थः.

निरवधिकतेजोरूप इति,नित्यमुक्तविग्रहाणामस्य चैकजाती-

---

(१) विभूषित इति मूले पाठः ।

(२) अवद्यकरमिति प्राचीनाऽस्ति पुस्तके टिप्पणी ।

(३) बहिःप्रकाशमाछादनामिति पु. पा. ।

यद्द्रव्यत्वेपि एकजातीयद्रव्यात्मकखद्योतशरीरतेजस आदित्यस्य विद्यमानतेजोतिशयवत्, तेषां सावधिकतेजस्त्वापादकनिरवधिक- तेजोरूप इत्यर्थः.

सौकुमार्यादिकल्याणगुणगणनिधिरिति, सौकुमार्यसौन्दर्यलाव- ण्यसौगन्ध्ययौवनप्रभृतिकल्याणगुणसमूहाश्रय इत्यर्थः. सौन्दर्यसौग- न्ध्यसौकुमार्यलावण्ययौवनाद्यनन्तगुणनिधिदिव्यरूपइति भाष्यकारः.

योगिध्येय इति, भगवद्ध्यानपराणां परमयोगिनां शुभाश्रयतया सदाध्यानविषय इत्यर्थः.

का चान्या त्वामृते देवि सर्वयज्ञमयं वपुः ।
अध्यास्ते देवदेवस्य योगिचिन्त्यं गदाभृतः ॥

इत्यऽसाधारणविग्रह एव योगिचिन्त्यत्वेनाभिहितः.

सकलजनमोहन इति, ज्ञाज्ञाऽविशेषेण सर्वजनानामपि स्ववैल- क्षण्येनोन्मादजनक इत्यर्थः. " पुंसां दृष्टिचित्तापहारिणम्, सर्वस- त्वमनोहर " इत्यादि.

समस्तभोगवैराग्यजनक इति, स्ववैलक्षण्यं दृष्टवतां स्वेतरसकल विषयानुभवेपि नैराश्यं जनयतीत्यर्थः. परमात्मनि यो रक्तो विरक्तो- ऽपरमात्मनीत्यादि.

नित्यमुक्तानुभाव्य इति, अपरिच्छिन्नज्ञानादिगुणकैर्नित्यैर्मुक्तैश्च " सदा पश्यन्ती"ति प्रकारेणाऽनवरतानुभाव्य इत्यर्थः.

वासनातटाकवत्सकलतापहर इति, " चक्षुःकरपादशुद्धरक्तकु- सुमै " रित्यारभ्य दिव्यसूरिवर्णनप्रकारेण दिव्यावयवविग्रहसंब- न्धेन भास्वत्प्रकाशविकसितपङ्कजरजःपरिमलप्रचुर[1] स्तटाक इव स्वाश्रितानां सांसारिकविविधतापं विरहतापं च सर्वन्दूरीकरोती- त्यर्थः.

अनन्तावतारकन्दामिति, " अजायमानो बहुधा विजायते, बहू- नि मे व्यतीतानी " त्युक्तानामनन्तावताराणामपि अप्राकृतदिव्यसं- स्थानमितरसजातीयं कृत्वा दीपादुत्पन्नप्रदीपवदागतत्वात् तेषां सर्वेषां मूलमित्यर्थः. " प्रकृतिं स्वामधिष्ठाय संभवामि, कल्पेकल्पे जायमानः स्वमूर्त्येत्यादि.

( १ ) यादवप्रकाशं विकासितपङ्कजः परिमलप्रचुर इति पुस्तकगतः पाठः।

सर्वरक्षक इति, ऐश्वर्यार्थिनां केवलानां भगवच्चरणार्थिनामुपासकानां प्रपन्नानामनुभवकैङ्कर्यपराणां नित्यमुक्तानां चाविशेषेण सर्वेषामनिष्टनिवृत्तिमिष्टप्राप्तिं च दिव्यमङ्गलविग्रहयुक्तः सन्नेव करोत्यतः सर्वरक्षक इत्यर्थः.

सर्वापाश्रय इति, उभयविभूत्याश्रय इत्यर्थः .

अस्त्रभूषणभूषित इति, पूर्वोक्तसर्वाश्रयत्वसूचकैरस्त्रभूषणाध्यायोक्तैर्विभूत्यभिमानिभिर्दिव्यायुधदिव्याभरणैरलंकृत इत्यर्थः.

आत्मानमस्य जगतो निर्लेपमगुणामलम् ।
बिभर्त्ति कौस्तुभमणिस्वरूपं भगवान् हरिः, ॥
श्रीवत्ससंस्थानधरमनन्ते च समाश्रितम् ।
प्रधानं, बुद्धिरप्यास्ते गदारूपेण माधवे, ।
भूतादिमिन्द्रियादिं च द्विधा ऽहंकारमीश्वरः ।
बिभर्त्ति शङ्खरूपेण शार्ङ्गरूपेण संस्थितम्, ॥
चलस्वरूपमत्यन्तजवेनान्तरितानिलम् ।
चक्रस्वरूपं च मनो धत्ते विष्णुः करे[1] स्थितम् ॥
पञ्चरूपा तु या माला वैजयन्ती गदाभृतः ।
सा भूतहेतुसंघातो भूतमाला च वै द्विज, ॥
यानीन्द्रियाण्यशेषाणि बुद्धिकर्मात्मकानि वै ।
शररूपाण्यऽशेषाणि तानि धत्ते जनार्दनः, ॥
बिभर्ति यच्चासिरत्नमच्युतो ऽत्यन्तनिर्म्मलम् ।
विद्यामयं तु तज्ज्ञानमऽविद्या चर्म संस्थितम् ॥

इत्यादि.

एवं विलक्षणविग्रहयुक्त इत्येतदुपपादितवान् ॥

अथैतद्विग्रहयोगप्रयुक्तानीश्वरस्य परत्वादिपञ्चप्रकारान् प्रत्येकं सुव्यक्तं दर्शयितुं विचार्य्य प्रथमं तानुत्क्षिपति[2]

**ईश्वरस्य स्वरूपं परव्यूहविभवान्तर्य्यामित्वार्चावतारभेदेन पञ्चप्रकारम्.**

(१) विष्णुकरे इति पु. पा. ।   (२) उत्क्षेपयतीति पु. पा. ।

ईश्वरस्य स्वरूपमित्यादिना. ननु लक्ष्मीभूमिनीला[1]नायक इत्येतदुपपाद्यानन्तरमिदं कुतो नोपपाद्यत इति चेन्न, तत्रोपपादनीयांशाभावात्.

वैकुण्ठे तु परे लोके श्रिया सार्द्धं जगत्पतिः।
उभाभ्यां भूमिनीलाभ्यां सेवितः परमेश्वरः॥

इत्युक्तत्वाच्च वक्ष्यमाणे परत्वे उक्तं भवेदिति विचार्य पृथङ् नोपपादितम्, तस्मान्न विरोधः.

ईश्वरस्वरूपमित्यत्र स्वरूपशब्दार्थः स्वासाधरणविग्रहो वा विग्रहविशिष्टस्वरूपं वा संग्रहेण कृतयोरन्ययोस्तत्त्वत्रयग्रन्थयोर्मध्य एकत्र विग्रहः पञ्चप्रकारः परत्वं व्यूहो विभवोऽन्तर्यामित्वमर्चावतार इति, अन्यत्र ईश्वरस्वरूपं हेयप्रतिभटमित्यारभ्य पत्नीपरिजनादिविशिष्टं भवतीत्युपपाद्यानन्तरमिदं च पञ्चविधमिति. इदंशब्देन प्रकृतमीश्वरस्वरूपं परामृश्य तत्परत्वादिभेदेन पञ्चप्रकारमिति स्वयमुक्तत्वात्. एवं पञ्चप्रकारविशिष्टं स्वरूपमित्यमुमर्थं

"मम प्रकाराः पञ्चेति प्राहुर्वेदान्तपारगाः।
परो व्यूहश्च विभवो नियन्ता सर्वदेहिनाम्॥
अर्चावतारश्च तथा दयालुः पुरुषाकृतिः।
इत्येवं पञ्चधा प्राहुर्मां रहस्यविदो जनाः॥

इति विष्वक्सेनसंहितायां स्वयमवोचत्.

एतान्पञ्चप्रकारान् क्रमेणोपपादयिष्यन्प्रथमं परत्वमुपपादयति

**तत्र परत्वम् ऽकालकाल्ये[2] ऽनवधिकानन्दे द्वितीये देशे नित्यमुक्तानां भोग्यत्वेनावस्थितिः.**

तत्र परत्वमित्यादिना. तेषु पञ्चसु परत्वं नाम "न कालस्तत्र वै प्रभुरिति, कला मुहूर्त्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुरिति, या वै न जातु परिणामपदास्पदं सा कालातिगा तव परा महती विभूतिः, यत्कालादपचेलिम"मिति चोक्तप्रकारेण कालकृतपरिणामशून्यदेशत्वादकालकाल्ये "आनन्दस्यान्तो नास्ती"त्युक्तप्रकारेण निरवधिकानन्दयुक्ते द्वितीये श्रीवैकुण्ठे "यत्र पूर्वे साध्याः

(१) लीलेति पाठान्तरम्। (२) अकाल्यकाल्ये इति पु. पा.।

सन्ति देवाः, यत्रर्षयः प्रथमजा ये पुराणा" इत्याद्युक्तप्रकारेण नित्याः कुचितज्ञानानामनन्तगरुड़विष्वक्सेनादीनां

सूर्य्यकोटिप्रतीकाशाः पूर्णेन्द्वयुतसन्निभाः ।
यस्मिन्पदे विराजन्ते मुक्ताः संसारबन्धनैः ॥

इत्युक्तप्रकारेण निवृत्तसंसाराणामसंकुचितज्ञानानां मुक्तानां चानुभवस्य विषयीभूतत्वेनावस्थितिरित्यर्थः.

वैकुण्ठे तु परे लोके नित्यत्वेन व्यवस्थिताः ।
पश्यन्ति च सदा देवं नेत्रैर्ज्ञानेन चाऽमराः ॥

इत्यादि ।

अथ व्यूहमुपपादयति

## व्यूहो नाम सृष्टिस्थितिसंहारार्थं संसारिसंरक्षणार्थमुपासकानुग्रहार्थं च संकर्षणप्रद्युम्नानिरुद्धरूपेणावस्थितिः.

व्यूह इत्यादिना. व्यूहस्य लीलाविभूतौ विनियोगात् एतद्विभूतेः सृष्टिस्थितिसंहाराणां निर्वाहार्थं बुभुत्सूनां संसारिणामनिष्टनिवृत्त्यादिकं कृत्वा रक्षणार्थं मुमुक्षुतयोपासनं कुर्वतां संसारनिवृत्तिपूर्वकस्वप्राप्तिनिदानानुग्रहार्थं च संकर्षणप्रद्युम्नानिरुद्धरूपेणावस्थिति[१]रित्यर्थः. अमुकेन व्यूहेनामुककार्य्यं क्रियत इत्युपपर्युपपादने द्रष्टव्यम्.

चतुर्विधः स भगवान् मुमुक्षूणां हिताय वै ।
अन्येषामपि लोकानां सृष्टिस्थित्यन्तसिद्धये ॥
आनन्त्यात्तव सेनाने व्यूह आद्यो मयेरितः ।
अनादिकर्मवश्यानां संसारे पततामधः ॥

इत्यारभ्य

उपासकानुग्रहार्थं जगतो रक्षणाय चेति
आविरासीद्भगवतः पञ्चायुधपरिष्कृतः ॥

(१) णैव स्थितिरिति पु. पा. ।

सो ऽयं संकर्षणाख्यो ऽभूत्तदेकान्तवपुर्धरः।
रुक्माभः सो ऽयमऽमलः सर्वशास्त्रेषु शब्दितः॥
सो ऽयं प्रद्युम्ननामाभूत्तदेकान्तवपुर्धरः।
इन्द्रनीलप्रतीकाश एष शास्त्रेषु शब्दितः॥
ततो नाम्ना ऽनिरुद्धो ऽयं स्वयमेवाभवन्मुने।
तदेकान्तवपुर्युक्तस्तादात्विकघनप्रभः॥

इति भगवच्छास्त्रे सृष्ट्यादयः संसारिसंरक्षणमुपासकानुग्रहश्च व्यूहकृत्यानीत्युक्तम्. चतुर्विधः स भगवानित्यत्र चातुर्विध्याभिधानं वासुदेवस्यान्तर्भावेण.

एतत्परव्यूहयोः को वा विशेष इत्यत आह

**परत्वे ज्ञानादयः षट् पूर्णा, व्यूहे द्वौद्वौ गुणौ प्रकटौ.**

परत्व इत्यादिना.

संपूर्णषड्गुणस्तेषु वासुदेवो जगत्पतिः। इति,
पूर्णस्तिमितषाड्गुण्यो निस्तरङ्गार्णवोपमः।
षण्णां युगपदुन्मेषाद्गुणानां स्वप्रचोदितात्।
अनन्त एव भगवान् वासुदेवः सनातनः॥

इत्युक्तप्रकारेण वासुदेवरूपपरत्वे ज्ञानबलैश्वर्य्यवीर्यशक्तितेजांसि षड्गुणाश्च परिपूर्णा इत्यर्थः.

संकर्षणादिरूपे

व्यूहे तत्रावशिष्टं षड्गुणानां द्वियुगं मुने।
अनुवृत्तिं भजत्येव तत्रतत्र यथातथम्॥

इत्युक्तप्रकारेणावशिष्टगुणचतुष्टयस्य तत्रतत्र वर्त्तमानत्वे[1] ऽप्यऽधिकृतकार्यानुगुणं गुणद्वयमेव प्रकाशत इत्यर्थः.

गुणैः षड्भिस्त्वेतैः प्रथमतरमूर्त्तिस्तव बभौ
ततस्तिस्रस्तेषां त्रियुग युगलैर्हि त्रिभिरभूः॥
व्यवस्था या चैषा ननु वरद साविष्कृतिवशाद्
भवान् सर्वत्रैव त्वगणितमहामङ्गलगुणः॥

(१) प्रवर्त्तमानत्वेऽपीति पु. पा.।

इत्ययमर्थः कूरेशैरभिहितः.

अथ संकर्षणादिषु त्रिषु प्रकाशमानान् गुणविशेषांस्तैरधिकृतानि कृत्यानि च प्रत्येकमभिधातुं विचार्य प्रथमं संकर्षणस्य प्रकारमाह

**तत्र संकर्षणो ज्ञानबलाभ्यां युक्तो जीवतत्त्वमधिष्ठाय तत् प्रकृतेर्विविच्य प्रद्युम्नावस्थां प्राप्य शास्त्रप्रवर्त्तनं जगत्संहारं च करोति.**

तत्र संकर्षण इत्यादिना. व्यूहत्रये संकर्षणः

तत्र ज्ञानबलद्वन्द्वाद्रूपं संकर्षणं हरेः। इति,
भगवानच्युतोपीत्थं षड्गुणेन समेधितः
बलज्ञानगुणौ तस्य स्फुटौ कार्यवशान्मुने ॥

इत्युक्तप्रकारेण सर्वगुणानां सत्त्वेपि कार्यानुगुणं ज्ञानबलाभ्यां युक्तः.

सोयं समस्तजीवानामधिष्ठातृतया स्थितः । इति,

संकर्षणस्तु देवेशो जगत्स्रष्टुमनास्ततः ।
जीवतत्त्वमधिष्ठाय प्रकृतेस्तु विविच्य तत् ॥

इति चोक्तप्रकारेण प्रकृतौ लीनजीवतत्त्वमधिष्ठाय तेनाधिष्ठानविशेषेण तत्प्रकृतेर्नामरूपविशेषो यथा भासते, तथा विविच्य

विवेकानन्तरन्देवः प्रद्युम्नत्वमवाप सः । इति,
सोयं प्रद्युम्ननामाभूत्तदेकान्तवपुर्धरः ।

इति चोक्तप्रकारेण प्रद्युम्नावस्थां प्राप्य

शास्त्रप्रवर्त्तनं चापि संहारं चैव देहिनाम् ।
बलेन हरतीदं स गुणेन निखिलं मुने ॥
ज्ञानेन तनुते शास्त्रं सर्वसिद्धान्तगोचरम् ।
वेदशास्त्रमिति ख्यातं पञ्चरात्रं विशेषतः ॥

इति चोक्तप्रकारेण वेदशास्त्रप्रवर्त्तनं जगत्संहारं च करोतीत्यर्थः ।

अथ प्रद्युम्नप्रकारमाह

**प्रद्युम्न ऐश्वर्य्यवीर्य्याभ्यां युक्तो मनस्तत्त्वमधिष्ठाय धर्मोपदेशं मनुचतुष्टयप्रभृतिशुद्धवर्गसृष्टिं च करोति.**

प्रद्युम्न इत्यादिना. प्रद्युम्न

ऐश्वर्य्यवीर्य्यसंभेदाद्रूपं प्रद्युम्नमुच्यत इति,
पूर्णषड्गुण एवायमच्युतोपि महामुने।
गुणावैश्वर्य्यवीर्याख्यौ स्फुटौ तस्य विशेषतः॥

इति चोक्तप्रकारेण सर्वेषु गुणेषु सत्स्वपि कार्यानुगुणं विशेषेण स्फुटाभ्यामैश्वर्य्यवीर्य्याभ्यां युक्तः

मनसोऽयमधिष्ठाता, मनोमय इतीरितः।

इत्युक्तप्रकारेण ज्ञानप्रसरणद्वारं मनस्तत्त्वमधिष्ठाय

ऐश्वर्य्येण गुणेनासौ सृजते तच्चराचरम्।
वीर्य्येण सर्वधर्माणि प्रवर्त्तयति सर्वशः॥

इत्युक्तप्रकारेण शास्त्रार्थानुष्ठानरूपाणां धर्माणामुपदेशं

मनूनां सर्गमकरोन्मुखबाहूरुपादतः।
चतुर्णां ब्राह्मणादीनां सर्गद्वारं जगत्पतिः॥
द्विजयुग्मं क्षत्रयुग्मं वैश्ययुग्मं तथैव च।
मिथुनं च चतुर्थस्य एतन्मनुचतुष्टयम्॥
मनुभ्यो मानवशतं स्त्रीपुंमिथुनतो भवेत्।
ऐकैकं वर्णभेदेन तेभ्यो मानवमानवाः॥
सहसा संवभूवुश्च स्त्रीपुंमिथुनतस्तथा।
मनुष्याश्च ततस्तेभ्यो बभूवुर्वीतमत्सराः॥
एते हि शुद्धसत्वस्था देहान्तं नान्ययाजिनः[1]।
निराशाः कर्मकरणान्मामेव प्राप्नुवन्ति ते॥
त्रय्यन्तेषु च निष्णाता द्वादशाध्यात्मचिन्तकाः।
व्यूहानुवृत्तिं सततं कुर्वते ते जगत्पतेः॥
तृतीयेन जगद्धात्रा निर्मिता मनसा स्वयम्।

---

(१) नान्ययायिन इति पुस्तकपाठस्तत्रापि स एवार्थो द्रष्टव्यः।

गुणप्रधानयोगे च निष्ठिताः पुरुषर्षभाः ॥
इत्येष शुद्धवर्गोयं गणेश तव कीर्तितः ।

इति विष्वक्सेनसंहितायामुक्तप्रकारेण मुखबाहूरुपादजान्मिथुनरूपब्राह्मणादिमनुचतुष्टयप्रभृतींस्तेभ्यो मनुभ्यो मिथुनात्प्रत्येकं वर्णभेदेन मानवशतं तथैव स्त्रीपुंस[1] मिथुनरूपं तेभ्यो मानवेभ्यो मानवमानवांस्तेभ्यो मनुष्यरूपान्निर्म्मत्सरान् शुद्धसत्वस्थान्देहान्तमऽनन्ययाजिनः फलाभिसन्धिराहित्येन भगवत्समाराधनरूपाणि कर्माण्यनुतिष्ठतो वेदान्ते निष्णातान् द्वादशाक्षरीमुखेनाध्यात्मचिन्तकान् सर्वेश्वरस्य व्यूहानुवृत्तिं सदा कुर्वतो भगवन्तं प्राप्नुवतः शुद्धवर्गान् सृजति ।

अथानिरुद्धप्रकारमाह

## अनिरुद्धः शक्तितेजोभ्यां युक्तो रक्षणस्य तत्त्वज्ञानप्रदानस्य कालसृष्टेर्मिश्रसृष्टेश्च निर्वाहकः ।

अनिरुद्ध इत्यादिना. अनिरुद्धः

" शक्तितेजःसमुत्कर्षादनिरुद्धतनुर्हरिरिति,
पुरुषोपि महाध्यक्षः पूर्णषाड्गुण्य उच्यते ।
शक्तितेजोगुणौ तस्य स्फुटौ कार्य्यवशान्मुने ॥

इत्युक्तप्रकारेण सर्वेषु गुणेषु सत्स्वपि कार्य्यानुगुणाभ्यां शक्तितेजोभ्यां युक्तः

शक्त्या जगदिदं सर्वमनन्ताण्डान्निरन्तरम् ।
बिभर्त्ति पाति च हरिर्मणिसानुरिवाणुकम् ।
तेजसा निखिलं तत्त्वं ज्ञापयत्यात्मनो मुने ॥

इत्युक्तप्रकारेण जगद्रक्षणस्योज्जीवनहेतुतत्वज्ञानप्रदानस्य

त्रुट्यादिद्विपरार्द्धान्तं कालसर्गमथाऽकरोत् ।

इत्युक्तप्रकारेण त्रुट्यादिद्विपरार्द्धान्तकालसृष्टेश्च

तुरीयो ऽयं जगन्नाथो ब्रह्माणमसृजत्पुनः ।
मुखबाहूरुपज्जातो ब्रह्मणः परमेष्ठिनः ॥
चतुर्विधो भूतसर्गस्तेन सृष्टः स्वयंभुवा ।
ब्राह्मणाद्यास्तथा वर्णा रजःप्राचुर्य्यतो ऽभवन् ॥

(१) स्त्रीपुमिति पु. पा. ।

त्रयीमार्गेषु निष्णाताः फलवादे रमन्ति ते ।
देवादीनेव मन्वाना न च माम्मेनिरे परम्[१] ॥
तमःप्रायास्त्विमे केचिन्मम निन्दां प्रकुर्वते ।
आराध्यं च नियन्तारं न जानन्तः परस्परम् ॥
संलापं कुर्वते व्यग्रं वेदवादेषु निष्ठिताः ।
मां न जानन्ति मोहेन मयि भक्तिपराङ्मुखाः ॥
स्वर्गादिषु रमन्त्येते अवसाने पतन्ति ते ।
कामात्मानो महाभाग जरामरणयोगिनः ॥
प्लवन्त्येते द्विजा मोहात्ते हि संसारवर्त्मनि ।
इत्येष मिश्रसर्गस्तु गणेश तव कीर्त्तितः ॥

इति विष्वक्सेनसंहितायामुक्तप्रकारेण ब्रह्मणो मुखबाहूरुपादजानां ब्राह्मणादिवर्णानां रजःप्रचुराणां पूर्वभागमार्गनिष्णातानां फलवाद आरमता[२]मीश्वरं विना देवादीनेवाराध्यतया ऽध्यवस्यतां तत्र केषांचित्तमःप्रचुराणां भगवन्निन्दां कुर्वतामाऽऽराध्यं नियन्तारं तम ऽजानतां व्यग्राणां वेदवादे मनो निवेश्य परस्परन्तमेव संलपताम ऽत एव भगवज्ज्ञानभक्त्योरन्वयशून्यानां स्वर्गादिष्वा ऽऽरमताकर्मफलावसाने ऽधः पततां कामविषयमनस्कानां जरामरणभाजां संसारमार्गगामिनां सृष्टिरूपां मिश्रवर्गसृष्टिं च करोतीत्यर्थः.'अण्डमण्डकारणानि च स्वयमुत्पादयति, अण्डान्तर्गतवस्तूनि चेतनान्तर्यामी सन्नुत्पादयतीति समष्टिः सर्वाप्यद्वारिका,व्यष्टिसृष्टिः सर्वा सद्वारिकेति प्राक् स्वयमुक्तत्वात्,'अस्मिन्नण्डे ब्रह्मात्मसमष्टिभूतो ब्रह्मा जायते, ततः पूर्वं स्वसंकल्पेन भगवान्स्वयमेव सृजति, अतः परं ब्रह्मणो ऽन्तर्यामी सन्सृजतीति श्रीकृष्णपादोक्तेश्च व्यष्टिसृष्टिः सर्वापि सद्वारिकैवाङ्गीकार्या, अतः प्रद्युम्नकृत्यत्वेनाभिहिता शुद्धवर्गसृष्टिरद्वारिका,अनिरुद्धकृत्यत्वेनाभिहिता मिश्रसर्गसृष्टिः सद्वारिकेत्यभिधानमयुक्तम्.तस्माच्छुद्धवर्गसृष्टिर्मिश्रवर्गसृष्टिश्च सद्वारकसृष्टौ चेतनानां कर्मविशेषमयुक्तसंकल्पविशेषेण भवेत्.एतच्छुद्धवर्गसृष्टेर्मिश्रवर्गसृष्टेश्च भगवतः श्रवणानन्तरं

( १ ) वरमिति पु. पा. ।
( २ ) रमतामिति पु. पा. ।

भगवन्देवदेवेश सर्वज्ञ परमेश्वर ।
किमेष भवता सृष्टो मिश्रसर्गो जगत्पते ॥
शुद्धसृष्टिं विहायैषां निर्दयं[1] पुरुषोत्तम ।
इति विष्वक्सेनेन पृष्टः[2]
विहाय शुद्धसर्गं च मिश्रसर्गस्य कारणम् ।
शृणुष्व गणनाथ त्वं दयालुर्निर्दयो न च ॥
सर्वज्ञोऽहं न सन्देहस्तथापि च सृजाम्यहम् ।
अनाद्यविद्यासंसृष्टशेमुषीकान्नरान ऽहम् ॥
तान् वीक्ष्या[3]ज्ञानसङ्गं तु निषिद्धकरणं तथा ।
विहिताकरणं चापि वीक्ष्यैषामपराधकान्[4] ॥
मिश्रसर्गं करोम्येवं ब्रह्मणा परमेष्ठिना ।
एवं सुकृतलेशेन शुद्धसर्गं करोमि च ॥
मनुप्रमुखसर्गो ऽयं शुद्धसर्गो मयेरितः ।
शुद्धसत्वमयाः सर्वे मद्भक्तिनिरताः सदा ॥
ममार्चनपराः सर्वे मद्ध्यानपरिबृंहिताः ।
नमस्यन्ते महाभागा महात्मानो जितेन्द्रियाः ॥
भक्त्या परमया चैव प्रपत्त्या वा महामुने ।
प्राप्य वैकुण्ठमासाद्य न निवर्त्तन्ति ते ऽव्ययाः ॥
एवं सर्वेषु कुर्वत्सु मानवेषु मुमुक्षुषु ।
सृष्टिक्षयो महानासीन्नारकी भूस्तृणावृता ॥
इति ज्ञात्वा मिश्रसर्गः क्रियते लीलया मया ।
इति भगवानाह . एवं व्यूहप्रकारा उपपादिताः ॥
अथ विभवप्रकारान् विस्तरेणाह

## विभवो ऽनन्तोऽपि द्विविधो[5] गौणमुख्यभेदेन भिन्नश्च ।

---

(१) निदर्यः इति पु. पा. । (२) विष्वक्सेनपृष्ट इति पु. पा. ।
(३) नरानिहन्तान्वीक्ष्येति पु. पा. ।
(४) विक्षैषा मयाराधकानिति पुस्तकगतः पाठोऽस्ति ।
(५) अनन्तद्विविध इति पु. पा. ।

१७

विभव इत्यादिना .

विभवोपि तथानन्तो द्विधैव परिकीर्त्यते ।
गौणमुख्यविभागेन शास्त्रेषु [ च ] हरेर्मुने ॥ इति,
प्रादुर्भावो द्विधा प्रोक्तो गौणमुख्यविभेदतः ।

इति चोक्तप्रकारेण विभवः परिगणनाऽशक्यो ऽनन्तो, गौणमुख्यभेदेन द्विविधश्चेत्यर्थः . विभवो नामेतरसजातीयत्वेनाविर्भावः . अत्र गौणो ऽमुख्यः, मुख्यः श्रेष्ठः . गौण आवेशावतारः, मुख्यः साक्षादवतारः. आवेशश्च स्वरूपावेशः शक्त्यावेश इति द्विविधः. तत्र स्वरूपावेशः स्वेन रूपेण सहावेशः . स च परशुरामादीनां चेतनानां शरीरेषु स्वासाधारणविग्रहेण सहावेशः शक्त्यावेशः कार्य्यकाले विधिशिवादिचेतनेषु शक्तिमात्रेण स्फुरणम् ।

अथ मुख्यविभवस्य गौणविभवस्य च साम्यवैषम्ये आह

## मनुष्यत्वं तिर्यक्त्वं स्थावरत्वमिव गौणत्वमिच्छयाऽऽगतं न स्वरूपेण ।

मनुष्यत्वमित्यादिना.

मदिच्छया हि गौणत्वं मनुष्यत्वमिवेच्छया ।
शूकरत्वं च मत्स्यत्वं नारसिंहत्वमेव च ॥
यथा वा दण्डकारण्ये कुब्जाम्रत्वं ममेच्छया ।
यथा वाजिमुखत्वं च मम संकल्पतोऽभवत्[1] ॥
सेनापते ममेच्छातो गौणत्वं न च कर्मणा ।

इत्युक्तप्रकारेण रामकृष्णादिमनुष्यत्वं मत्स्यादितिर्यक्त्वं कुब्जाम्रत्वरूपं स्थावरत्वमित्येतत्सर्वं यथा ममेच्छया जातम्, तथाऽऽवेशरूपं गौणत्वमपीच्छया ऽऽगतमित्याकारः समः अप्राकृतस्वासाधारणविग्रहेण सह नागतमित्यर्थः. उपात्तवचनैरिच्छया प्रयुक्तत्वाभिधानेपि गौणस्य मनुष्यत्वादिवदप्राकृतदिव्यसंस्थानमितरजातीयं कृत्वा ऽवताररूपत्वाभावात् स्वरूपेण नागतमिति सिद्धम् ।

अथोपास्यत्वानुपास्यत्वकथनमुखेनोभयोर्विशेषं दर्शयितुं प्रथमं मुख्यविभवस्योपास्यत्वं सहेतुकमाह

( १ ) भवेदिति पु. पा. ।

**तत्राप्राकृताविग्रहा अजहत्स्वभावविभवा दीपादुत्पन्नदीपव[1]त्स्थिता मुख्यप्रादुर्भावाः सर्वे मुमुक्षूणामुपास्याः.**

तत्राप्राकृतेत्यादिना. उभयविधे विभवे

प्रादुर्भावास्तु मुख्या ये मदंशत्वाद्विशेषतः ।
अजहत्स्वभावा विभवा[2] दिव्याप्राकृतविग्रहाः ॥
दीपाद्दीपा इवोत्पन्ना जगतो रक्षणाय ते ।
अर्च्या एव हि सेनेश संसृत्युत्तरणाय ते ॥
मुख्या उपास्याः सेनेश अनर्च्यानितरान् विदुः ।

इत्युक्तप्रकारेणाऽप्राकृतविग्रहाः "अजोपि सन्नऽव्ययात्मा भूतानामीश्वरोपि सन्" इत्युक्तप्रकारेणापरित्यक्ताऽजत्वाव्ययत्वसर्वेश्वरत्वादिस्वभावा अत एव दीपादुत्पन्नाः स्वकारणदीपस्वभावयुक्ताः दीपा इव स्वकारणविग्रहतुल्यस्वभावा मुख्यप्रादुर्भावाः सर्वे मुमुक्षूणामुपास्या इत्यर्थः ।

**विधिशिवपावकव्यासजामदग्न्यार्जुनवित्तेशादिरूपा गौणप्रादुर्भावाः सर्वे ऽहंकारयुक्तजीवाधिष्ठातृत्वान्मुमुक्षूणामनुपास्याः ।**

अथ गौणविभवस्यानुपास्यत्वं सहेतुकमाह विधिशिवेत्यादिना .

अनर्च्यानपि वक्ष्यामि प्रादुर्भावान् यथाक्रमम् ।
चतुर्मुखस्तु भगवान् सृष्टिकार्ये नियोजितः ॥
शंकराख्यो महारुद्रः संहारे विनियोजितः ।
मोहनाख्यस्तथा बुद्धो व्यासश्चैव महानृषिः ॥

---

(१) प्रदीपेति मूले टीकायां च पाठः ।
(२) मदंशत्वादिविशेषतः अजहत्स्वभाविभवा इति पुस्तकगतः पाठः ।

वेदानां व्यसने तत्र देवेन विनियोजितः ।
अर्जुनो धन्विनां श्रेष्ठो जामदग्न्यो महानृषिः ॥
वसूनां पावकश्चापि वित्तेशश्च तथैव च ।
एवमाद्यैश्च सेनेश प्रादुर्भावैरधिष्ठिताः ॥
जीवात्मानः सर्व एते नोपास्या वैष्णवैः सदा ।
आविष्टमात्रास्ते सर्वे कार्यार्थममितद्युते ॥
अनर्च्याः सर्व एवैते विरुद्धत्वान्महामते ।
अहंकृतियुताश्चेमे जीवमिश्रा व्यधिष्ठिताः ॥

इत्युक्तप्रकारेण सृष्टिकर्त्ता ब्रह्मा, संहारकृतः शिवपावकादयः, वेदव्यसनकृद् व्यासः, दुष्टक्षत्रियनिरासको जमदग्निपुत्रः परशुरामः अकार्यचिन्तासमकालमेव प्रादुर्भवंश्चापधरः पुरस्ता"दित्युक्तप्रकारेण चापधरो रक्षकः कार्त्तवीर्यार्जुनः, औदार्य्यप्रधानो वित्तेशः आदिशब्देन क्रोडीकृताः ककुत्स्थमुचुकुन्दप्रभृतयः. एते गौणप्रादुर्भावाः सर्वे स्वातन्त्र्यरूपाहंकारयुक्ताञ् जीवान्कार्यार्थमावेशमुखेनाधिष्ठिताः. अतो बुभुक्षूणामेवोपास्या, न तु मुमुक्षूणामित्यर्थः. व्यासजामदग्न्यार्जुनेत्यत्रार्जुनः पाण्डुपुत्रो ऽर्जुनो वा, तस्याप्यावेशावतारतयेतिहासादिष्वभिधानात्. इदं गौणप्रादुर्भावानुपास्यत्वं

ब्रह्मरुद्रार्जुनव्याससहस्रकरभार्गवाः ।
ककुत्स्थात्रेयकपिलबुद्धाद्या ये सहस्रशः ॥
शक्त्यावेशावतारास्तु विष्णोस्तत्कालविग्रहाः ।
अनुपास्या मुमुक्षूणां यथेन्द्राग्न्यादिदेवताः ॥

इति संहितान्तरेप्युक्तम्. ननूपात्तवचनेषु बुद्धमुनेरप्यवतारत्वेनाभिधानं स्वेन रूपेणावतीर्णवा[1] नित्यस्मादाचार्य्यवचनैर्विरुद्धमिति चेन्न, कल्पभेदेन तथाभिधानोपपत्तेः. जामदग्न्यस्य स्वरूपावेशावतारत्वेपि शक्त्यावेशैः सहपाठस्तु स्वरूपावेशस्यापि शक्तिविशेषकृतत्वादित्यवधेयम्. एवं विभवानामानन्त्य,न्तद्गौणमुख्यविभागं, तद्गौणमुख्ययोः परस्परविरोधं चावोचत्.

(१) अवतृतवानिति पु. पा. ।

अथ पूर्वोक्तपरव्यूहानां मुख्यविभवानां चावान्तरभेदस्य तेषां भुजायुधवर्णादिभेदस्य च वक्तव्यत्वेपि तदनभिधानस्य हेतुमाह

**नित्योदितशान्तोदितादिभेदो जाग्रत्संज्ञादिचातुरात्म्यं केशवादिमूर्त्त्यन्तराणि षड्विंशद्भेदभिन्नपद्मनाभादिविभवा उपेन्द्रत्रिविक्रमदधिभक्तहयग्रीवनरनारायणहरिकृष्णमत्स्यकूर्मवराहाद्यवतारविशेषा, स्तेषां भुजायुधवर्णकृत्यस्थानादिभेदाश्च दुरवधारत्वादनुद्युतमत्वाच्च नोच्यन्ते.**

नित्योदितेत्यादिना. नित्योदितशान्तोदितादिभेद इति, "नित्योदितात्संबभूव तथा शान्तोदितो हरि" रित्याद्युक्तप्रकारेण नित्यमुक्तानुभाव्यो नित्योदितसंज्ञकः परवासुदेवः, तत उत्पन्नः संकर्षणव्यूहकारणभूतः शान्तोदितसंज्ञको व्यूहवासुदेव इति वासुदेवमूर्त्तिभेदः. व्यूहाश्चत्वारस्त्रय इति शास्त्रेपूच्यन्ते. चतुर्षु सत्स्वपि त्रय इत्यभिधानं व्यूहवासुदेवस्य पररूपादनुसंधेयगुणभेदाभावादित्यऽभियुक्तोक्तेरस्य ग्रन्थकृतो व्यूहत्रयाभिधानस्यात्र व्यूहवासुदेवाभिधानस्य न विरोधः. जाग्रत्संज्ञादिचातुरात्म्यमितिशान्तोदितोत्पत्तिकथनानन्तरं

चातुरात्म्यमथाप्यण्डं कृपया परमेष्ठिनः ।
उपासकानुग्रहार्थं यः परश्चेति कीर्त्यते ॥
शान्तोदितात्प्रवृत्तं च चातुरात्म्यत्रयन्तथा ।
उपासकानुग्रहार्थं सेनेश मम तत्पुनः ॥
सुषुप्तिस्वप्नसंज्ञं यज् जाग्रत्संज्ञं तथा परम् ।
चातुरात्म्यं महाभाग पञ्चमं परमेश्वरम् ॥ इति,
आद्यो व्यूहो मया प्रोक्तो ह्यपरं त्रितयं शृणु ।
उपासकानुग्रहार्थं स्वप्नादिपदसंस्थितम् ॥
स्वप्नाद्यवस्थाभेदस्तु ध्यायिनां खेदशान्तये ।
तत्तत्पदस्थजीवानां तन्निवृत्त्यर्थमेव च ॥

स्वप्नाद्यवस्थाजीवानामधिष्ठातार एव ते ।
कर्मात्मनां च सेनेश तत्पदस्थो ममेच्छया ॥
उपास्योहं महाभाग यद्भेदप्रयोजनम् ।

इति, चोक्तप्रकारेणोपासकानुग्रहार्थं स्वकृपया कृतं ध्यायिनां खेदशान्तये तत्तत्पदस्थजीवानान्तन्निवृत्तये तत्तत्पदस्थजीवानामधिष्ठातृत्वेन तत्पदस्थस्य कर्मवश्यानां जीवानामुपास्यत्वेन यदऽभेद[1] प्रयोजनकं व्यूहचतुष्टयेपि प्रत्येकं जाग्रत्स्वप्नसुषुप्तितुरीयसंज्ञक[2] चतूरूपवत्त्वामित्यर्थः. केशवादिमूर्त्यन्तराणीति.

एतदन्तर्गताः सर्वे मूर्त्यन्तरसमाह्वयाः ।
केशवाद्या द्वादश च ललाटादिषु निष्ठिताः ॥
शरी [ र ] रक्षकाः सर्वे ध्यायिनां तापशान्तये । इति,
केशवादित्रयं तत्र वासुदेवाद्विभाव्यते ।
संकर्षणाच्च गोविन्दपूर्वं त्रितयमद्भुतम् ॥
त्रिविक्रमाद्यं त्रितयं प्रद्युम्नादुदितं मुने ।
हृषीकेशादिकं तद्वदऽनिरुद्धान्महामुने ॥

इत्युक्तप्रकारेण ललाटादिषु स्थित्वा शरी [र] रक्षणं कुर्वन्ति ध्यायिनां तापशान्त्यर्थानि व्यूहचतुष्टयात्प्रत्येकं त्रितयं त्रितयमुत्पन्नानि मूर्त्यन्तरसमाह्वयाः केशवादिव्यूहान्तराणि षड्विंशद्भेदभिन्नाः पद्मनाभादिविभवा इति

पद्मनाभादिकाः सर्वे वैभवीयास्तथैव च ।
षड्विंशत्संख्ययाऽऽसंख्याताः[3] प्राधान्येन गणेश्वर ॥
षड्विंशद्भेदभिन्नास्ते पद्मनाभादिकाः सुराः ।
अनिरुद्धात्समुत्पन्ना दीपाद्दीपा इवेश्वर ॥

इत्युक्तप्रकारेण दीपाद्दीपान्तरवदनिरुद्धादुत्पन्नाः प्रधानभूताः षड्विंशद्भेदेन भिन्नाः पद्मनाभाद्यवतारविशेषा इत्यर्थः. एते च पद्मनाभादयो

विभवाः पद्मनाभाद्यास्त्रिंशच्च नव चैव हि ।
पद्मनाभो ध्रुवोऽनन्तः शक्त्यात्मा मधुसूदनः ॥

---

( १ ) उपास्यत्वैकपदभेदेति पु. पा. ।

( २ ) तुरीयं सञ्ज्ञकेति ।

( ३ ) संख्यया संख्याता इति पु. पा. ।

विद्याधिदेवकपिलो विश्वरूपो विहङ्गमः ।
क्रोधात्मा वडवावाक्त्रे धर्मो वागीश्वरस्तथा ॥
एकाम्भोनिधिशायी च भगवान्कमठेश्वरः ।
वराहो नरसिंहश्च पीयूषहरणस्तथा ॥
श्रीपतिर्भगवान्देवः कान्तात्मा ऽमृतधारकः ।
राहुजित्कालनेमिघ्नः पारिजातहरस्तथा ॥
लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः ।
न्यग्रोधशायी भगवानेकश्शृङ्गतनुस्तथा ॥
देवो,वामनदेहस्तु सर्वव्यापी त्रिविक्रमः ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥
ज्वलत्परशुधृग्रामो रामश्चान्यश्चतुर्गतिः ।
वेदविद्भगवान्कल्की पातालशयितः प्रभुः ॥
त्रिंशच्च नव चैवैते पद्मनाभादयो मताः ।

इत्येकोनचत्वारिंशत्संख्याकत्वेनाऽहिर्बुध्नसंहितादावुक्तत्वेपि विष्वक्सेनसंहितायां षड्विंशत्संख्यानामभिधानान्न विरोधः. षड्त्रिंशद्भेदभिन्ना इत्यस्य अत्रैकोनचत्वारिंशत्सु त्रयाणामवमः कार्य्यः. ते च कपिलदत्तात्रेयपरशुरामा आवेशावताराः. उपेन्द्रत्रिविक्रमदाधिभक्तहयग्रीवनरनारायणहरिकृष्णमत्स्यकूर्मवराहाद्यवतारविशेषा इति सर्वावतारकन्दतया ऽनिरुद्धस्यैव सर्वावतारान्प्रति कारणत्वाभिधानेपि पूर्वोक्तपद्मनाभादिभिः सहपठितेषु पूर्वोत्पन्नविभवादुत्पन्नानि विभवान्तराणि सन्तीति प्रदर्शनादि किंचित् प्रयोजनमुद्दिश्य

पूर्वोत्पन्नाद्वैभवीयात् प्रादुर्भूतो महेश्वरः ।
प्रादुर्भावान्तरान्विद्धि तान् गणेश्वर मुख्यतः ॥
उपेन्द्राच्च यथामुख्यात् त्रिविक्रमतनुर्हरिः ।
दधिभक्तश्च देवेशो दर्वीहस्तो ऽमृतप्रदः ॥
कृष्णाच्च मत्स्यरूपः स्यान्मत्स्याद्धयशिरा यथा[1] ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥

इति पृथगभिहिताः. इन्द्रस्य सहायभूतो जगद्रक्षणकृदुपेन्द्रावतारः. सीमागामिवल्लोकान् क्रान्त्वा तस्य भ्रष्टैश्वर्य्यप्रदस्त्रिविक्रमावतारः. अमृतप्रदानार्थमङ्गीकृतो दाधिभक्तावतारः. वेदप्रदानार्थो हयग्रीवावतारः. शिष्याचार्य्यरूपे स्थित्वा श्रीमन्त्रप्रकाशकृन्नरनारा-

(१) हयशिरो यथेति पु. पा. ।

यणावतारः. तद्वद्धर्मदेवताया जनित्वा लोकरक्षणकृद्धरिः कृष्णश्चेति अवताराः प्रलयरक्षणमन्दराधारत्वभूम्युद्धरणैस्सह विद्याप्रदानकृन्मत्स्यकूर्मवराहाद्यवतारा आदिशब्देन क्रीडीकृता नरसिंहकल्क्यवतारप्रभृतयश्चेत्यर्थः.

तेषां भुजायुधवर्णकृत्यस्थानादिभेदांश्चेति, तेषां पूर्वोक्तानां परव्यूहविभवानां

भुजायुधानां नियमस्तत्रतत्रेच्छया मम ।
जाग्रत्संज्ञे चातुरात्म्ये तथा भुजचतुष्टयम् ॥
शान्तोदितास्तु द्विभुजाः स्वप्नाद्या गणनायक ।
आदिदेवो जगन्नाथो वासुदेवो जगत्पतिः ॥
चतुर्भुजः श्यामलाङ्गो परमे व्योम्नि निष्ठितः ।
नित्योदितः शान्ततनुरास्ते व्योमनि षड्गुणः ॥
शान्तोदितश्शान्तवपुर्द्विभुजः पुरुषाकृतिः ।
केशवाद्या गणाध्यक्ष मूर्त्यन्तरसमाह्वयाः ॥
उपासकानां सेनेश भुक्तिमुक्तिफलप्रदाः ।
सर्वे चतुर्भुजा ज्ञेयाः पद्मशङ्खादिधारकाः ॥
तत्तच्छास्त्रेषु च ज्ञेया लाञ्छनाभरणादयः ।
चतुश्चक्रधरं मां च स्मृत्वा जाम्बूनद[1]प्रभम् ॥
चतुः शङ्खधरं देवं नीलजीमूतसन्निभम् ।
इन्द्रनीलनिभश्यामं चतुर्हस्तैर्गदाधरम् ॥
चतुर्भुजधनुष्मन्तं चन्द्रमसदृशद्युतिम् ।
चतुर्हलधरं देवं पद्मकिंजल्कसन्निभम् ॥
मुशलास्त्रं महाविष्णुमरविन्दाभमेव च ।
खड्गपाणिं चतुर्हस्तमग्निसन्निभतेजसम् ॥
चतुर्भुजं वज्रधरं तरुणादित्यसन्निभम् ।
पट्टिशायुधहस्तं च पुण्डरीकाभमेव च ॥
चतुर्भिर्मुद्गरधरं भुजैर्विद्युत्समप्रभम् ।
पञ्चायुधधरं मां च सहस्रांशुसमप्रभम् ॥
पाशहस्तधरं देवं बालार्कशतसन्निभम् ।

---

(१) जांवुनदेति पु. पा. ।

इत्यादिभिरुक्ता भुजभेदा वर्णभेदा एतेषां व्यूहभेदविभवभेदानां सर्वेषामुक्ताः. कृत्यभेदा आमोदादयो ऽयोध्यामथुरादयश्च व्यूहविभवानां प्रत्येकं स्थानभेदा आदिशब्देन क्रोडीकृता भूषणवस्त्रादिभेदाश्चेत्यर्थः. दुरवधारत्वाद् गुह्यतमत्वाच्च नोच्यन्त इति, एतेषां सर्वेषामभिधानेपि केनापि ज्ञातुमशक्यत्वाद ऽवताररहस्यतया ऽतिगुह्यत्वाच्च नोच्यन्त इत्यर्थः ॥

ननु लोके जन्मनां हेतुः कर्म, अस्यैतदवताराणां को हेतुरित्यत आह

## अवताराणां हेतुरिच्छा.

अवताराणामिति. " बहुधा विजायते, बहूनि मे व्यतीतानि जन्मानि, अनेकजन्मा " इत्याद्युक्तप्रकारेण बहुविधतयोक्तानाम ऽस्यावताराणां हेतुः ' एवमवतरामी ' ति स्वेच्छैव, हेत्वन्तरं नास्तीत्यर्थः."सम्भवाम्यात्ममायये"ति स्वयमेवोक्तम्. आत्ममायया आत्मेच्छयेत्यर्थः."माया वयुनं ज्ञान"मिति मायाशब्दो ज्ञानवाचित्वादिच्छारूपं ज्ञानमभिदधाति. "इच्छागृहीताभिमतोरुदेह"इत्यादि.

इयं वैयूही वै[1] स्थितिरथ किलेच्छाविहृतये
विभूतीनां मध्ये सुरनरतिरश्चामवतरन् ।
सजातीयस्तेषामिति तु विभवाख्यामपि भजन्
करीश त्वं पूर्णो वरगुणगणैस्तान् स्थगयसि ॥ इति.

एवं स्थिते त्वदुप[2]संश्रयणाभ्युपायो
मानेन केनचिदलप्स्यत नोपलब्धुम् ।
नो चेदऽमर्त्यमनुजादिषु योनिषु त्व-
मिच्छाविहारविधिना समवातरिष्यः ॥

इत्यादिना ऽवतारहेतुरिच्छेति कूरेशैः सुविशदमभिहितम् । नन्वस्त्वियं हेतुस्तथापि फलमेतेषामवताराणां किमित्यत आह

---

(१) इयं वै व्यूही वै—इति पु. पा.।
(२) त्वद्रूपेति पु. पा. ।

## फलं साधुपरित्राणादित्रयम्म्.

फलमित्यादि.

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्म्मसंस्थापनार्थाय सम्भवामि युगेयुगे ॥

इति स्वयमुक्तप्रकारेण स्वस्मिन्प्रेमयुक्तानां स्वानुभवं विना क्षणकालमपि स्थातुमशक्तानां स्वदर्शनाऽऽशावतां साधुजनानां स्वस्य रूपचेष्टिताऽऽलोकालापादिदानमुखेन रक्षणम्, तद्विरोधिनां दुष्कृतां नाशः, स्वाराधनभूतस्य क्षीणस्य वैदिकधर्मस्याऽऽराध्यस्य स्वस्य स्वरूपं दर्शयित्वा स्थापनमित्येतत् त्रयमेव फलमित्यर्थः. "साधव उक्तलक्षणधर्मशीला वैष्णवाग्रेसरा निर्मत्सरा मत्समाश्रयणे प्रवृत्ता मन्नामकर्मस्वरूपाणां वाङ्मनसागोचरतया मद्दर्शनेन विना ऽऽत्मधारणपोषणादिकमऽलभमानाः क्षणमात्रकालं कल्पसहस्रं मन्वानाः प्रशिथिलसर्वगात्रा भवेयुरिति मत्स्वरूपचेष्टितावलोकनालापादिदानेन तेषां परित्राणाय तद्विपरीतानां विनाशाय च क्षीणस्य वैदिकस्य धर्मस्य मदाराधनस्वरूपस्याराध्यस्वरूपदर्शनेन स्थापनाय च युगेयुगे सम्भवामि, कृतत्रेतायुगविशेषनियमोपि नास्तीत्यर्थ" इत्यस्य श्लोकस्यार्थो भाष्यकारैरुक्तः.

ये भक्ता भवदेकभोगमनसोऽनन्यात्मसंजीवना-
स्तत्संश्लेषणतद्विरोधिनिधनाद्यर्थं गजाद्रीश्वर[1]।
मध्येऽण्डं यदवातरः सुरनराद्याकारदिव्याकृति-
स्तेनैव त्रिदशैर्नरैश्च सुकरं स्वप्रार्थितप्रार्पणम्[2] ॥

इति कूरेशैरुक्तम्.

अवतार ऐच्छिक इत्यज्ञात्वा कर्मनिबन्धन इति स्थितैर्मन्दमतिभिः क्रियमाणं प्रश्नमनुवदति

**बहुप्रमाणेषु भृगुशापादिभिर्जात इत्युक्तत्वादवताराणां हेतुः कर्म भवेदिति चेत्,**

---

( १ ) वनाद्रीश्वरेति पु. पा. ।
( २ ) प्रार्थनमिति पु. पा. ।

बहुप्रमाणेष्वित्यादिना.

पतिव्रता धर्मपरा हता येन मम प्रिया ।
स तु प्रियाविरहितश्चिरकालं भविष्यति ॥

इत्येतादृशभृगुशापादिभिर्जात इत्युक्तत्वादऽवतारहेतुरिच्छा न भवेत्, किन्तु कर्मेति चेदित्यर्थः.

तस्योत्तरमाह

**तत्र शापो व्याजो ऽवतार ऐच्छिक इति परिहारः कृतः.**

तत्रेत्यादिना.

तपसा ऽऽराधितो देवो ह्यब्रवीद्भक्तवत्सलः ।
लोकानां संप्रियार्थन्तु शापं तद्ग्राह्यमुक्तवान् ॥

इत्युत्तरश्रीरामायणे

सर्वावर्त्तेषु वै विष्णोर्जननं स्वेच्छयैव तु ।
जरकास्त्रच्छलेनैव स्वेच्छया गमनं हरेः ॥
द्विजशापच्छलेनैवमऽवतीर्णोपि लीलया ।

इति लैङ्गपुराणादिष्वभिहितत्वात् 'भृगुशापादिभिर्जात' इत्यत्र शापो व्याजमात्र,मवतार इच्छाप्रयुक्त इति परिहारः कृत इत्यर्थः ।

एवं विभवमुपपाद्यान्तर्यामित्वमुपपादयति

**अन्तर्यामित्वमन्तःप्रविश्य नियन्तृत्वम्.**

अन्तर्यामित्वमित्यादिना."य आत्मानमन्तरो यमयति, अन्तः प्रविष्टः शास्ता जनानाम्,शास्ता विष्णुरशेषस्य जगतो यो हृदि स्थित" इत्यादिपूक्तप्रकारेण चेतनानामन्तः प्रविश्य सकलप्रवृत्तीनां नियन्तृत्वमित्यर्थः. अस्य चान्तर्यामित्वस्यात्मनो ऽन्तः स्वस्वरूपेण व्याप्तिं कृत्वा नियन्तृत्वं सविग्रहस्य हृदयव्याप्त्या नियन्तृत्वमिति च द्विविधत्वादुभयमप्याह

**स्वर्गनरकप्रवेशादिसर्वावस्थास्वपि सकलचेतनानां सहायभूतस्य तांस्त्यक्तुमसमर्थस्य स्थिति-**

**रऽथ शुभाश्रयेण विग्रहेण सहितस्य तेषां ध्येयत्वार्थं तान् रक्षितुं च बन्धुभूतस्य हृदयकमले स्थितिश्च ।**

स्वर्गनरकेत्यादिना. "अन्तर्यामिस्वरूपं च सर्वेषां बन्धुवत् स्थित" मित्यारभ्य " स्वर्गनरकप्रवेशेपि बन्धुरात्मा हि केशव " इत्युक्तप्रकारेण पुण्यनिबन्धनस्वर्गप्रवेशपापनिबन्धननरकप्रवेशोभयनिबन्धनगर्भप्रवेशादिषु सर्वावस्थास्वपि चेतनानां रात्रौ मठभोजयितृवदऽन्तः स्थित्वा सत्ताया रक्षकत्वात्सहायभूतस्य तान् कदाचिदपि त्यक्तुमशक्तस्यान्तरात्मतया ऽवस्थितिः. " अङ्गुष्ठ[1]मात्रः पुरुषो ज्योतिरिवाधूमक " इति " नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरे " त्यादिषूक्तप्रकारेणातसीरूपश्यामलं[2] स्वात्मानमकुण्ठमयन्त्या तप्तकाञ्चनस्पृहणीयकान्त्या नीलतोयदं ग्रसमानया विद्युल्लेखयेव[3] स्थितत्वाद् बाह्यविषयप्रवणं मनस्ततो निवर्त्य स्वस्मिन्प्रवणं कुर्वता शुभाश्रयेण सह तेषां चेतनानां ध्यानरुच्युत्पत्तिकाल एव ध्येयत्वार्थं बुद्ध्यादिनियमनेन तद्रक्षणार्थं च नारायणत्वप्रयुक्तोदरसम्बन्धेन बन्धुभूतस्य " पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुख " मित्युक्ता हृदयकमले स्थितिरित्यर्थः. अन्तरात्मत्वं प्रथममुक्त्वा ततः सविग्रहस्य हृदयकमले स्थितिमभिधाय समापनं विग्रहयोगप्रयुक्तपरत्वाद्यभिधानप्रकरणत्वात्. एवमन्तर्यामित्वमुपपादितम् ।

अथार्चावतारमुपपादयति

---

( १ ) अथाङ्गुष्ठेति पु. पा. ।

( २ ) प्रकारेण रतीरूपं श्यामलमिति पु. पा. ।

( ३ ) ग्रसन्ती विद्युल्लेखेवेति पुस्तकगतः पाठस्तु प्रामादिकः, व्यस्तपदोपात्तोपमायामुपमानसमर्पकपदस्योपमेयसमर्पकसमानविभक्तिकत्वस्य तन्त्रत्वात्. किञ्च, ग्रसतेरनुदात्तेत्त्वाच्छता चिन्त्यो ऽनुदात्तेत्त्वलक्षणस्यात्मनेपदस्य चक्षिङो विचक्षणाद्यर्थमनुदात्तेत्त्वस्यावश्यकत्वेऽपि ङित्त्वाछिङ्गादऽनित्यत्वज्ञापनात्स्फायन्निर्मोकसन्धीत्यादिवद्वा सः. एतेना ऽयन्त्येत्यपि व्याख्यातम्, इट किट कटीति प्रश्लिष्टस्य वा द्रष्टव्यम् ।

**अर्चावतारश्चेतनानामभिमतेषु द्रव्येषु विभवविशेषेभ्यो वैलक्षण्येन देशकालाधिकारिनियमं विना ऽपराधान ऽपश्यतो ऽर्चकपरतन्त्रसमस्तव्यापारवत आलयेषु गृहेषु च वर्त्तमानस्य स्थितिः ।**

अर्चावतार इत्यादिना. आश्रिता यत्किंचिद्द्रव्यं स्वस्य विग्रहत्वेन कल्पयन्ति चे, त्तदेव स्वस्य विग्रहत्वेनाङ्गीकरोतीत्युक्तप्रकारेणाश्रितानां चेतनानामभिमतेषु स्वर्णरजतशिलापर्यन्तेषु केषुचिद्द्रव्येषु अयोध्यामथुरादिदेशनियमम् एकादशसहस्रसंवत्सराश्शतसंवत्सरा इत्यादिकालनियमं दशरथवसुदेवादिवदधिकारिनियमं कृत्वा-सन्निधिं कुर्वद्भ्यो रामकृष्णादिविभवविशेषेभ्यो वैलक्षण्येन भौमनिकेतनेष्वपि कुटीकुञ्जेष्वित्युक्तप्रकारेण देशनियमं विना ऽर्चकस्यापेक्षाकालव्यतिरिक्तकालनियमं विना सकलरुचिमदर्थत्वात् अधिकारिनियम विना सन्निधिं कृत्वा सर्वसहिष्णुरित्युक्तप्रकारेण सर्वसहिष्णुत्वात्तत्कृतापराधान्सर्वानऽपश्यतो ऽर्चकपराधीनाखिलात्मस्थितिरित्युक्तप्रकारेणार्चकपरतन्त्रस्नानाशनशयनादिसमस्तव्यापारविशिष्टस्य स्थितिरित्यर्थः. "अर्चा पूजाप्रतिमयोरि [ त्यु ] क्तत्वादर्चाशब्दः प्रतिमावाची.

अथैतदर्चावतारस्य रुचिजनकत्वादिगुणपूर्त्तिमाह

**रुचिजनकत्वं शुभाश्रयत्वमशेषलोकशरण्यत्वमनुभाव्यत्वं सर्वमर्चावतारे परिपूर्णम्.**

रुचिजनकत्वमित्यादिना. शास्त्रैरशक्यनिवर्त्तनं विषयान्तराभिनिवेशेन विमुखानां चेतनानां स्वस्य रूपौदार्य्यगुणैर्वैमुख्यं दूरीकृत्य स्वविषये रुच्युत्पादकत्वं रुचिजननानन्तरं स्वं भजतां तेषां हृदयस्य भोग्यत्वापादकं शुभाश्रयत्वन्तावन्मात्रेण विना स्वस्यैवोपायत्वेन स्वीकारे गुणाऽगुणनिरूपणं विना सकललोकस्थानां शरणवरणार्ह-

त्वम्[1]. उपायत्वमात्रं विना देशविशेषगमन एवानुभाव्यत्वं नान्यथेति विप्रतिपत्तिर्यथा न स्यात्, तथा वैलक्षण्याभिज्ञाना माममृतभूतं पश्यन्ती नेत्रे अन्यं[2]न पश्यत" इत्युक्तप्रकारेणानुभाव्यत्वमित्येतत्सर्वमर्चावतारे परिपूर्णमित्यर्थः.

सुरूपां प्रतिमां[3] विष्णोः प्रसन्नवदनेक्षणाम् ।
कृत्वात्मनः प्रीतिकरीं सुवर्णरजतादिभिः ॥
तामर्चयेत् तां प्रणमेत्तां पूजेत्तां विचिन्तयेत् ।
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ॥

इत्येतदर्चावतार आश्रिताभिमतद्रव्यं स्वस्य विग्रहत्वेन स्वीकृत्य तेषामुपास्यः प्राप्यश्च भवतीति भगवता श्रीशौनकेनोक्तम्. अथार्चावतारस्य गुणाधिक्यं वदन् प्रबन्धं निगमयति

**स्वस्वामिभावव्यत्यासं कुर्वन्नऽज्ञ इवाशक्त इवाऽस्वतन्त्र इव च स्थितोप्यपारकारुण्यपरवशः सर्वापेक्षितानि ददातीति ॥ ॥**

स्वस्वामिभावेत्यादिना. " स्वत्वमात्मनि संजातं स्वामित्वं ब्रह्मणि स्थित"मित्युक्तप्रकारेण चेतनस्य स्वत्वं स्वस्य स्वामित्वं च व्यवस्थितम्,तथाप्ययं स्वीयवस्तुभिः सह स्वामिनं स्वात्मानमपि [यथा] सह पठेत्, तथा स्वामित्वं तस्मिन्स्वत्वं स्वस्मिंश्च व्यत्यासेन स्वेच्छयैव कुर्वन् "यः सर्वज्ञः सर्ववित्, पराऽस्य शक्तिर्विविधैव श्रूयते, न तस्येशे कश्चने"ति"सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्य" इति चोक्तप्रकारेण सर्वज्ञः सर्वशक्तिर्निरङ्कुशस्वतन्त्रः स्वपरकार्यानभिज्ञो ऽज्ञ इव स्वरक्षणायाऽशक्त इवासाधारणमहिमशून्यो ऽस्वतन्त्र इव च वर्त्तमानोपि विमुखानपि त्यक्तुमसामर्थ्यापादकस्य निरवधिककारुण्यस्याधीनः नेत्रपुत्रप्रभृतीनि मोक्षपर्यन्तानि यथाधिकारं चेतनानां सर्वापेक्षितानि च ददातीत्यर्थः.

---

(१) शरणवर्णार्हत्वमिति प. पा. ।
(२) ममामृतभूतं पश्यती नेत्रे ऽन्यमिति पुस्तकगतपाठस्तु लेखक प्रमादात्।
(३) त्वरूपां प्रतिमामिति पु. पा. ।

अर्चावतारस्सर्वेषां बान्धवो भक्तवत्सलः ।
स्वत्वमात्मनि संजातं स्वामित्वं ब्रह्मणि स्थितम् ॥

इति.अर्चावतारः सर्वेषां बन्धुः भक्तवत्सलः स्वत्वमात्मनि व्यवस्थितं स्वामित्वं ब्रह्मणि व्यवस्थितमित्यर्थ इति. व्यवस्थिते चापि ममायं केशवः स्यात्तु ममायं राम इत्येवं देवः परशुलाञ्छन इति प्रकारेण शेषशेषित्वयोर्व्यवस्थितयोरपि मदीयः केशवः परशुलाञ्छनो देवो मदीयः

ममायं वामनो नाम नारसिंहाकृतिः प्रभुः ।
वराहवेषो भगवान् नरो नारायणस्तथा ॥
तथा कृष्णश्च रामश्च ममायमिति निर्दिशेत् ।
मद्ग्रामवासी भगवान्ममेति च सुधीर्भवेत् ॥
चिन्तयेच्च जगन्नाथं स्वामिनं परमार्थतः ।
अशक्तमस्वतन्त्रं च रक्ष्यं चापि जनार्दनम् इति,
तदिच्छया महातेजा भुङ्क्ते वै भक्तवत्सलः ।
स्नानपानं तथा यात्रां कुरुते वै जगत्पतिरिति,
स्वतन्त्रः सञ्जगन्नाथो ऽप्यस्वतन्त्रो यथा भवेत् ।
सर्वशक्तिर्जगद्धाता ऽप्यशक्त इव चेष्टते ॥ इति,
सर्वान् कामान् ददत्स्वाम्यप्य ऽशक्त इव लक्ष्यते ।
अपराधानभिज्ञः सन् सदैव कुरुते दयाम् । इति,
अर्चावतारविषये मयाप्युद्देशतस्तथा ।
उक्ता गुणा न शक्यन्ते वक्तुं वर्षशतैरपि इति,
ऋते च मत्प्रसादाद्वा स्वतो ज्ञानागमेन वा इति ।
एवं पञ्चप्रकारो ऽहमात्मनां पततामधः ।
पूर्वस्मादपि पूर्वस्माज्ज्यायांश्चैवोत्तरोत्तरः ॥

परव्यूहादिपञ्चप्रकारो ऽधः पततामात्मनां पूर्वपूर्वप्रकारापेक्षयोत्तरोत्तरं सौलभ्येन श्रेष्ठ इति

सौलभ्यतो जगत्स्वामी सुलभो ह्युत्तरोत्तर इति,
सर्वातिशयषाड्गुण्यं संस्थितं मन्त्रबिम्बयोः ।
मन्त्रे वाच्यात्मना नित्यं बिम्बे तु कृपया स्थितम् ॥

इत्यादिभिरर्चावतारगुणाधिक्यं विष्वक्सेनसंहितायां सर्वेश्वरेण स्वयमुक्तम्.

आस्तान्ते गुणराशिवद्गुणपरीवाहात्मनां जन्मनां
संख्या, भौमनिकेतनेष्वपि कुटीकुञ्जेषु रङ्गेश्वर ।
अर्च्यः सर्वसहिष्णुरर्चकपराधीनाखिलात्मस्थितिः
प्रीणीषे हृदयालुभिस्तव ततः शीलाज्जडीभूयते ॥

इत्यवतारकथनानन्तरमर्चावतारवैभवं संग्रहेणैकेन श्लोकेनोक्तं भट्टार्य्यैः ॥

एवमीश्वरस्य स्वरूपवैलक्षण्यं, तस्य स्वरूपस्यातिशयाऽऽवहगुणवैलक्षण्यं, तादृशगुणहेतुकास्तेन क्रियमाणाः सृष्ट्यादिव्यापाराः, कारणभूतस्य सर्वसमाश्रयणीयत्वं, तस्य सर्वफलप्रदत्वं, कारणत्वाद्युपयोगिविलक्षणविग्रहयोगस्तद्विग्रहवैलक्षण्यानुरूपं लक्ष्मीभूमिनीलानायकत्वं, तादृशविग्रहयोगप्रयुक्ताः परत्वादिपञ्चप्रकाराश्चोक्ताः—एवमीश्वरतत्त्वं निगमितम्म् ॥ ॥

## ॥ इति श्री ६ मद्वरवरमुनिस्वामिनिबद्धभाष्योपबृंहितं श्री ६ मल्लोकाचार्यचरणप्रणीतं तत्त्वत्रयं समाप्तम्म् ॥

लोकगुरुं गुरुभिः सह पर्वैः कूरकुलोत्तमदासमुदारम् ।
श्रीनगपत्यभिरामवरेशौ धीप्रशयं वरयोगिनमीडे ॥

॥ श्रीः ॥

# भाट्टभाषाप्रकाशः

श्रीनारायणतीर्थमुनिविरचितः

काशीस्थराजकीयसंस्कृतप्रधानपाठशालाध्यापक
स्वामिभागवताचार्येण संशोधितः ।

चौखम्बासंस्कृतपुस्तकालयाध्यक्ष श्रीहरिदासगुप्तेन

काश्याम्

तारायन्त्रालये श्रीमैनकम्पनीलिमिटेड्द्वारा संमुद्र्य प्रकाशितः ।

सन् १९००

वैक्रमसंवत् १९५७

श्रीः ।

# भूमिका ।

---

आन्वीक्षिकी-त्रयी-वार्त्ता-दण्डनीतीनां चतसृणां महाविद्यानां द्वितीयस्यां स्वर्गापवर्गावायत्तेते, सा चेयमान्वीक्षिकीमन्तरेण न प्रतितिष्ठतीति प्रथमां तामुपजीवति, अन्तिमे तु द्वे दृष्टादृष्टद्वारेण त्रयीमुपजीवतः। स्वाध्यायपदवाच्यवेदवाक्यकदम्बकग्रहणादनन्तरं विचारयोगादान्वीक्षिकीति, पूजितविचाररूपत्वाच्च मीमांसेति मीमांसा न्यायविस्तर इति विद्यास्थानेषु विशिष्य परिगणितं पदवाक्यप्रमाणेषु द्वितीयमिदं मीमांसाशास्त्रमतिविततं सहस्रशो युक्तिजालजटिलम् । यस्मिन् परमपुरुषस्य स्वच्छन्दोदारा स्वीयमायाशक्तिदुर्विमर्शकार्यजातप्रसवस्वभावप्रवणाऽप्याज्ञा पदे पदेऽधिकरणेषु प्रत्यर्थिपरःशततर्कैर्भृशमायासभारं भजन्ती स्वीयतत्त्वसतत्त्वमासादयति । विविधाः खलु लोकानां मतिभेदाः प्रवृत्ताः पूर्वोत्तरमीमांसयोरैकशास्त्र्यं न वा पूर्वमीमांसाऽपि षोडशलक्षणी न वेत्यादिकया कृतमत्राधिकया कथया, यत्र तां जैमिनिमुनिकृतां जैनजनकृतां बहवः पण्डितनामानोऽपि जना मन्यन्ते । कलिसंमर्दसहस्रेषूपास्थितेषु वेदाध्ययनादेः प्रविरलभावे तदुज्जीवनकथा दुराशाऽऽवेशमात्रमुपहासास्पदम्, परं शास्त्रान्तरेषु तत्रतत्र मीमांसान्यायोपस्तम्भदानादऽपारिभाषिकपण्डितानां तदर्थावबोधः संक्षेपतो भवति बुभुत्सितः । तदर्थं न्यायप्रकाशादिग्रन्थोऽस्त्येव परं तत्राध्यायपादक्रमाद्यभावान्मूलशास्त्रानुसारेण तज्जिज्ञासूनां भवति कस्यापि संक्षिप्तग्रन्थस्यापेक्षा, तदर्थमयं भाट्टभाषाप्रकाशः प्रकाश्यते ।

अयं हि श्रीशिवरामतीर्थशिष्येण श्रीमता नारायणतीर्थेनोपनिबद्धोऽध्यायपादक्रमेण शास्त्रान्तरोपयुक्तैर्मीमांसार्थैर्लाघवमपेक्षमाणेन प्रायः सिद्धान्तोक्तिमात्रेण क्वाचित्तु पूर्वपक्षादिकमप्यावश्यकत्वे सत्युल्लिखता ।

अयं श्री नारायणतीर्थयतिर्नूनं दाक्षिणात्यः काशीवासी नीलकण्ठ-शास्त्रिणः पुत्रो गोविन्दशास्त्री नाम्ना गृहस्थावस्थ एव[1] भाट्टभाषाप्रकाशमुप-निबन्धुमुपक्रम्य संन्यस्ताश्रमे पर्यापयामास। अस्य च ग्रन्थस्य नाम भट्ट-भाषा भाट्टभाषा भाट्टभाषाप्रकाशिका भाट्टभाषाप्रकाशश्च, अर्थस्तु सर्वत्राऽविशिष्टः प्रभाकरगुरुकुमारिलभट्टमुरारिमिश्राणामद्यत्वे पूर्वमीमांसाशास्त्रे मतानि लभ्यन्ते। तत्रापि च भाट्टप्रक्रियैव बहुमानभाजनमिति सैव भाट्टभाषा, तस्याः प्रकाश इति।

तदेतदित्थमुपयुक्तं मन्यमानेन मया पुस्तकद्वयमाश्रित्य संस्कृतम्। अत्र प्रथमपुस्तकं श्रीकाशिकराजकीयसंस्कृतपाठशालीयपुस्तकशालायाः १९३७ संवत्सरे लिखितमशुद्धिबहुलं स्थानस्थानेषु गुरुलघुभिस्त्रुटिभि-र्हीनपाठमथापि प्रायः स्पष्टाक्षरम्, तदेतत् कनाम प्रथमम्। द्वितीयन्तु श्रीमन्नेपालमहाराजाधिराजगुरूणां श्रीमतां हेमराजपण्डितानां प्राचीनम्, (तत्र संवत्सरलेखस्तु न) एतच्च प्रथममष्टौ पत्त्राणि यावत् केनापि विदुषा लिखितं यद्यपि विद्वज्जातीयलिपियुक्, तथापि तत्रतत्र भ्रान्तिदाक्षरमथापि कार्यक्षमम् परं ततः परतस्तु बालविक्रीडितमात्रमेव, तदतत् ख-नाम! तृतीयं तु श्रीदामोदरलालगोस्वामिनोऽधुनैव लेखितम्। तत्प्रायः कपुस्तकानुसारि त्रुटिषु खपुस्तकानुसारीत्यभिन्नमिति स्थितमात्रमेवाऽभूदन्तिके। इत्थंचा-त्रावतमसे गहनप्रविष्टेनेवात्मानं पुस्तकद्वययोगेन भाष्याद्यनुग्रहेण च कथंक-थमपि निस्तार्य श्रीहरिदासगुप्तप्रार्थनया पारमनैषम्। तदेतत् शास्त्ररसि-कानां पुरस्तादुपदीकरोमि कृतमधिकवाग्भिरिति।

ज्येष्ठारम्भपञ्चम्यां १९५७ भागवताचार्यः।

वाराणस्याम्

---

(१) क-पुस्तके हि प्रथमाध्यायान्ते पितुः स्वस्य च नाम्नोर्लेखनादिदं लभ्यते।

॥ हरिः ॐ तत्सत् ॥

अथ

# भाट्टभाषाप्रकाशः ।

प्रणम्य धर्ममीशानं मीमांसां प्रविविक्षताम् ।
बालानामुपकाराय भाट्टभाषा प्रकाश्यते ॥ १ ॥
धर्मे प्रमाणान्यथ कर्मभेदः शेषप्रयुक्तिक्रमकर्तृभेदाः ।
द्वेधातिदेशस्तमनूहबाधौ तन्त्रप्रसङ्गाविति लक्षणार्थाः ॥ २ ॥

तत्र धर्मस्वरूपमुक्तम्—

फलतोपि च यत्कर्म नानर्थेनानुबध्यते ।
केवलं प्रीतिहेतुत्वात्तद्धर्म इति कथ्यते ॥ इति ।

श्येनादिव्यावृत्त्यर्थं फलत इति । तस्य हि न धर्मत्वं श्येनेनाऽभिचरन् यजेतेतिवेदबोधितत्वेपि तत्फलस्य शत्रुवधस्यानर्थहेतुत्वात् ॥

'पशुबीजादिवधजन्यदोषेण धर्मेपि स्वल्पः संकरोस्ती'ति सांख्या मन्यन्ते, तन्निरासाय केवलमिति । न हिंस्यात्सर्वा भूतानीति निषेधो हि रागतः प्राप्ताया हिंसाया अनर्थहेतुत्वं बोधयति नत्वऽग्नीषोमीयं पशुमालभेतेति विहितायाः, विधिस्पृष्टे निषेधानवकाशात्, परिहृत्यापवादमुत्सर्गाः प्रवर्तन्त इति न्यायेन निषेधशास्त्रं क्रत्वङ्गं हिंसां परिहृत्यैव प्रवर्तत इति न धर्मफले दुःखलेशसंकरोस्तीति सुष्ठूक्तं केवलमिति ॥

धर्मे प्रमाणान्यपि प्रसिद्धानि, वेदो ऽखिलो धर्ममूलं तद्विदां च स्मृतिशीले धर्मज्ञसमयः प्रमाणम् । वेदाश्च—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति ।

तथाहि । स्वाध्यायोऽध्येतव्य इति तव्यप्रत्ययेन विधिभावना प्रतीयते । भावना च भवितुर्भवनानुकूलो भावकव्यापारः सर्वेषां लकाराणामर्थः । विधिभावना तु प्रवर्त्तनात्मिका लिङ्लोट्तव्यप्रत्ययपञ्चमलकारेभ्य एवावगम्यते । सा च द्वेधा शाब्द्याऽऽर्थी च । प्रत्येकं फलकरणेतिकर्त्तव्यतांशैस्त्र्यंशा । तत्र शाब्द्यामध्ययने प्रवृत्तिः फलम्, करणं तव्यप्रत्ययः । वेदे वक्त्रभावेपि लोके ग्रामो गन्तव्य इत्यादवयं मामनेन शब्देन प्रवर्तयतीति प्रत्ययाच्छब्दस्यैव करणत्वदृष्टेः । इतिकर्त्तव्यता तु अप पुनर्मृत्युं जयतीत्यन्तार्थवादमुखेन प्राशस्त्यावगतिः । आर्थ्यां तु किं भावयेदिति भाव्याकाङ्क्षायां कर्मोत्पन्नतव्यप्रत्ययश्रुत्या स्वाध्यायस्यैव भाव्यत्वं गम्यते ।

ननु यथा विश्वजिता यजेतेत्यत्र निष्फले प्रवर्त्त्यसंभवात्स्वर्गकाम इति पदमध्याह्रियते । यथा वा ज्योतिर्गौरायुरित्यादिवाक्यविहितेषु रात्रिसंज्ञकेषु यागेषु फलाऽश्रवणे ऽपि प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यर्थवादादेव ये प्रतिष्ठामिच्छन्ति त एता रात्रीरुपेयुरिति प्रतिष्ठारूपं फलं वाक्यविपरिणामेन कल्प्यते, एवं स्वर्गकामेन स्वाध्यायोऽध्येतव्य इत्यपमृत्युजयादिकं वाऽऽर्थवादिकं फलं कल्प्यम्, दुःखरूपस्य स्वाध्यायशब्दितस्य वेदराशेर्भाव्यत्वासंभवादिति चेन्न, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् दृष्टे संभवत्यऽदृष्टकल्पनाया अनाय्यत्वाच । संभवति चात्र वर्णराश्यधिगमद्वारार्थावगतिरूपं दृष्टं प्रयोजनम् ।

यथोक्तम् दृष्टो हि तस्यार्थः कर्मावबोधनमिति। अतस्तदेवात्र भाव्यम्।

करणाकाङ्क्षायां तु अध्येतव्य इति समानपादोपात्तमध्ययनं गुरुमुखोच्चारणानूच्चारणरूपमुपतिष्ठते। इतिकर्तव्यताकाङ्क्षायां च निगमनिरुक्तव्याकरणादिकम्। तेनायमर्थः। अध्ययनेनार्थज्ञानं भावयेत् निरुक्तादिभिरुपकृत्येति। यस्त्वत्र गुरुद्वारैवार्थज्ञानं भावयेन्नात्मव्युत्पत्तिबलेनेति नियमः, न तस्य दृष्टं किंचित्फलमस्तीति तदंशे ऽस्त्वार्थवादिक्य ऽदृष्टकल्पना।

एवं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादावपि भावनाया अंशत्रयं ज्ञेयम्। अत्रापि समानपदोपात्तमपि धात्वर्थमुपेक्ष्य काम्यमानत्वाद् व्यवहितापि स्वर्गो भाव्यत्वेनान्वेति, धात्वर्थो यागः करणत्वेन। नहि संभवति यजेतेत्यस्य यागं कुर्यादित्यर्थे दर्शपूर्णमासाभ्यामिति तृतीयान्तेन यागनामधेयेनान्वयः। तेन दर्शपूर्णमासाभ्यां यागाभ्यां स्वर्गं भावयेत् प्राकरणिकैः प्रयाजादिभिरुपकृत्येति वाक्यार्थः संपद्यते। स्वर्गपदार्थश्च श्रुत्या दर्शितः—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमिति॥

नहीदृशसुखहेतावतीन्द्रिये धर्मे वेदादन्यत्प्रमाणं प्रत्यक्षं वा तदुपजीव्यऽनुमानं वा क्रमते, तस्माद्वेद एव विधिनिषेधात्मको धर्माधर्मयोः प्रमाणम्। तौ च पदपदार्थसम्बन्धस्यौत्पत्तिकत्वेन वाक्यार्थप्रतीतेर्मूलवत्तया व्यवस्थितस्वरूपावेव।

ननु पदतदर्थसम्बन्धस्य नित्यत्वेपि पदसमुदायरूपाणां वाक्यानां काठकादिसमाख्यावशादादिमतां कालिदासादिवाक्यानामिवाप्रामाण्यमिति चेन्न, काठकादिसमाख्यायाः कठेन प्रोक्तमिति योगेन प्रवचनपरतया वेदस्य पौरुषेयत्वासाधकत्वात्। दृढकर्तृस्मरणाभावश्च वेदस्यापौरुषेयत्वे प्रमाणम्। अनुमानं च—

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाध्ययनं यथेति ॥

नन्वेवमपि वेदैकदेशस्य विध्यंशस्य धर्मप्रमापकत्वेपि वायुर्वै क्षेपिष्ठा देवतेत्यादीनामर्थवादानां विधिभावनांशत्रयानन्तःपातिनां धर्माऽप्रमापकत्वाद्वेदो ऽखिल इत्यखिलग्रहणमनुपपन्नमिति चेन्न । तेषामपि प्रयोजनाकाङ्क्षिणां क्षिप्रदेवतासाध्यं कर्म क्षिप्रफलमिति लक्षणया विधिं स्तुवतां सन्निहितेन वायव्यं श्वेतमालभेतेति विध्युपदेशेन स्वविधेये पुरुषं प्रवर्त्तयितुमन्यतः स्वस्तुतिमाकाङ्क्षमाणेन (ता) नष्टाश्वदग्धरथन्यायेनैकवाक्यतया विध्यंशान्तःपातित्वात् । नन्वेवमर्थवादानां स्तुत्यर्थत्वेपि कचित्फलपरत्वमपि दृश्यते । औदुम्बरो यूपो भवतीति विधाय ऊर्क् पशव ऊर्गुदुम्बर ऊर्जैवास्मा ऊर्ज्जं पशूनाप्नोतीत्यस्य फलपरत्वसंभवादिति चेन्न, अतिदेशशास्त्रप्राप्तयूपानुवादेन उदुम्बरतायास्तत्फलस्य च विधाने वाक्यभेदात्सैव विधेयेति पशूनाप्नोतीत्यस्यार्थवादत्वमेव। चतुर्थे तु यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजा इज्यन्ते वर्म यजमानस्य भ्रातृव्याभिभूत्यै-इत्यादौ वाक्यान्तरप्राप्तस्यैव पर्णतादेः रात्रिसत्रवदार्थवादिकफलपरत्वमाशङ्क्य परार्थ्यान्नेति सिद्धान्तितम्। अन्यतः प्राप्तिश्च विधिशक्त्युपघातकयच्छब्दोपबन्धादन्तिमोदाहरणाच्च स्पष्टमेव गम्यते नैवमुदुम्बरताया इति नानयोरधिकरणयोः पौनरुक्त्यम् । शूर्पेण जुहोतीति श्रौतं शूर्पम् तेन ह्यन्नं क्रियत इत्यत्र करणेन हेतुना कल्प्यमानसाधनभावेन दर्वीपिठरादिना न विकल्पनम्, अतुल्यबलत्वात् । तस्मात्तेन हीति स्तुतिमात्रम् न तु यद्यदन्नकरणं तेन तेन होतव्यमिति हिशब्देन व्याप्तिसूचनमत्र कर्तुं शक्यम्, उक्तदोषात् । तदेवं विधिवन्निगदानां हेतुमन्निगदानां

चार्थवादानां सिद्धं प्रामाण्यं विध्येकवाक्यतया स्तुतिद्वारैव ॥

एवं तत्तत्प्रकरणपठितानां मन्त्राणामपि तत्तत्प्राकरणिकार्थप्रकाशनसामर्थ्यरूपाल्लिङ्गात्तत्तदनुष्ठेयार्थस्मारकत्वेन दृष्टेनैव द्वारेण विध्येकवाक्यता, अत्रापि पूर्ववत्परस्पराकाङ्क्षा ज्ञेया। यस्तु मन्त्रैरेवमन्त्रार्थः स्मर्त्तव्यो न ग्रहणकवाक्यादिनेति नियमो, न तदंशे किंचिद् दृष्टं प्रयोजनं लभ्यत इत्यऽदृष्टमगत्या कल्प्यते। यथा यावतो ऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदिति विध्युद्देशे प्रतिग्रहीतुरिष्टिः प्रतीयते। अथापि प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत् स पर्यदीर्यत स एनं वारुणं चतुष्कपालमपश्यदित्युपक्रमगतार्थवादसामर्थ्याद्दातुरिष्टिं प्रापयन्प्रतिगृह्णीयादित्यत्र प्रतिग्राहयेदिति णिच्श्रुतिमुत्थापयति, यथा वा होतुश्चित्पूर्वे हविरद्यमाशतेति मन्त्र[ः]सामर्थ्याद्वषट्कर्त्तुः प्रथमो भक्ष इति विधिमुत्थापयति।

एवमष्टकाः कर्त्तव्या इत्यादीनि मन्वादीनां स्मरणान्यपि स्वमूलभूतां श्रुतिमनुमापयन्ति, वेदैकप्रमाणकेषु सर्वज्ञेषु तेषु भ्रमविप्रलम्भकत्वादिदोषासंभवात्। दृश्यन्ते च क्वचित्क्वचिच्छाखान्तरेपि प्रयाजाः[1] कर्त्तव्या इत्यादिस्मृतिमूलभूताः श्रुतयः (धन्विवमया असि त्वमग्न इत्यादयः।) [2]तत्सामान्यात्सर्वमपि स्मरणं दृष्टमूलकमेव। यथोक्तम्—

आत्मीयात्परकीयस्य दौर्बल्यं न हि किंचन।
प्रत्यक्षत्वाविशेषेण स्वप्रत्यक्षसमं हि तत्॥

इति न्यायेन प्रत्ययिततराणां मन्वादीनां प्रत्यक्षलिङ्गादि प्रत्यक्ष[3]तुल्यम्। अतस्तत्प्रणीता स्मृतिरपि मूलमनुमापयेदेव। अने-

(१) 'प्रयाजा' इत्येवोभय पुस्तकपाठः।
(२) ( ) एतदन्तर्गतपाठः 'ख' पुस्तके नास्ति।
(३) प्रत्यक्षलिङ्गादपि प्रत्यक्षेति 'क' पुस्तकपाठः।

कासु शाखासु विप्रकीर्णानामर्थानां सुखप्रतिपत्तय एकत्र प्रणयनमर्थवद्भवतीति सिद्धं स्मृतीनां वेदमूलकत्वेन प्रामाण्यम् ॥

औदुम्बरी सर्वा वेष्टयितव्येति स्मृतिः औदुम्बरीं स्पृष्ट्वोद्गायेदित्यनया श्रुत्या विरुध्यते, सर्ववेष्टने सति स्पर्शासम्भवादप्रमाणमिति भाष्यम्। अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीत्येकत्राऽनुपसंहरणीयस्याप्यर्थद्वयस्य वेदे दर्शनात्सर्ववेष्टनस्मृतिमूलभूतश्रुतेरत्यन्ताभावस्यास्मदादिभिरल्पज्ञैर्निश्चेतुमशक्यत्वात् तत्सामान्यादितरेषु तथात्वमिति न्यायेनैकस्याः स्मृतेरप्रामाण्ये सर्वासामपि तथात्वापत्तेश्च नासावप्रमाणम्, किंतु यावन्मूलदर्शनं नास्ति तावदर्थानुष्ठानं न कर्त्तव्यमित्येवंपरं[1] विरोधेत्वनपेक्षं स्यादितिसूत्रमिति वार्त्तिकम् ।

हेतुदर्शनाच्चेत्यत्र वैसर्जनहोमीयं वासोऽध्वर्युः परिगृह्णातीति स्मृतेः श्रुत्यविरोधित्वेपि लोभमूलकत्वस्यैव हेतोर्दर्शनादप्रामाण्यमिति भाष्यम्। स्मृतित्वाविशेषाच्छाक्यस्मृतेरपि प्रसक्तं प्रामाण्यम्। तेषु प्रत्यक्षेण वेदविद्वेषदर्शनान्न तस्या वेदमूलकत्वं कल्पयितुं शक्यमिति वार्त्तिकम्। शिष्टाकोपेऽविरुद्धमिति चेन्न शास्त्रपरिमाणत्वादित्यत्र वेदं कृत्वा वेदिं करोतीतिश्रुतिशिष्टस्य क्रमस्याकोपे सति क्षुते आचामेदिति स्मृतिः प्रामाणं न तु कोपे इति चेन्न, शास्त्रपरिमाणत्वात्। आचमनं हि नैमितिकः पदार्थः, क्रमस्तु पदार्थधर्मः। अतः पूर्वं पदार्थः प्राप्नोति पश्चाद्धर्म इति प्रबलप्रमाणप्रापितोपि स्वतो जघन्यत्वान्नाचमनस्मृतिं बाधितुमीष्टे इति भाष्यम् ।

शाक्यशास्त्रेपि यद् वेदाऽविरुद्धमहिंसादिकं विहितम्, तत्तदपि ग्राह्यमिति चेन्न वेदादिना प्रमितस्यैवा ऽहिंसादेर्मन्त्रस्मारितकर्मण इव फलवत्त्वं, नाऽन्येतेति शास्त्रे नियमात्। तथाचाहुः

(१) इत्येव परमिति ख० पाठः ।

धर्मज्ञसमयः प्रमाणं वेदाश्चेति । तस्माद्गङ्गोदकमिव श्वदृतिस्थं धर्मोऽपि शाक्यग्रन्थस्थस्तद्वाक्यान्नोपादेय इति वार्त्तिकम् ।

अत्रैव अपि वा कारणाग्रहणप्रयुक्तानि प्रतीयेरंस्तेष्वदर्शना-द्विरोधस्येति तृतीयसूत्रे येषां वसन्तोत्सवादीनां धर्मत्वे कारणं श्रुतिः स्मृतिर्वा न दृश्यते, केवलं शिष्टैश्च धर्मबुद्ध्या यान्यनुष्ठी-यन्ते, तेष्वपि शास्त्रान्तरविरोधाऽदर्शने सति प्रामाण्यं स्वध्यव-सेयमित्यपि वार्तिकमेव ॥

अत्र स्मृतीनां श्रुतिकल्पनासापेक्षतया एकान्तरितं प्रामाण्यम्, शिष्टाचाराणां तु स्मृतिकल्पनापूर्वकं श्रुतिकल्पनं चेति द्व्यन्तरितम् ।

तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यादित्यत्र यवादिश-ब्दार्था दीर्घशूकादय एव गृह्यन्ते यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमानाइवोत्तिष्ठन्तीति वाक्यशेषात् । न तु म्लेच्छप्रसिद्ध्या प्रिय-ङ्ग्वादय इति भाष्यम् । यद्वा पील्वादिपदार्थाः किं म्लेच्छप्रसिद्ध्या गजादय उतार्यप्रसिद्ध्या वृक्षादय इति संशये आर्याणां शब्दार्थ-योरविप्लवे नित्यं यतमानानां प्रसिद्धिर्बलीयसी न तु म्लेच्छानां यथाकथंचित्सांकेतिकैरपि शब्दैर्व्यवहारमात्रमिच्छताम् । यद्वा । असपिण्डामुद्वहेदित्यादिस्मृतीनां सन्निबन्धानां मातुलदुहितृपरि-णयनाद्याचारेभ्यो निर्निबन्धनेभ्यो लोभमूलकेभ्यः प्राबल्यमत्र निर्णीयते । वस्तुतस्तु मातुलदुहितृपरिणयनं न विगीतम् तृप्तां जहु-मातुलस्येव योषा, भागस्ते पैतृष्वसेयीव यामिवेति(?)मन्त्रलिङ्गावग-तत्वात् प्रद्युम्नाद्यैः शिष्टैरादृतत्वाच्च किं तु देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभागिति स्मृतेरग्नीषोमीयालम्भस्य कलौ दुर्ल-भत्वात्पलपैतृकस्य च निषेधात्तदुभयं विना क्रियमाणं मांसभक्षणं दोषहेतुः, अतस्तदेवात्रोदाहरणमिति दाक्षिणात्याः, जहुरपत्यम्

( असपिण्डामिति शास्त्रं तु नातिरात्र इतिवन्मतान्तराभिप्रायम् )[1] यद्वा त्रिवृदादिपदार्थो वाक्यशेषात्स्तोत्रीयानवकादिकमेव न तु लोकप्रसिद्ध्या त्रिवृद्रज्ज्वादिकमिति वर्णकत्रयं वार्तिके ।

पिकादिपदानामर्थो म्लेच्छप्रसिद्ध्यापि शुकादिर्ग्राह्यः, तस्यार्याणां क्वचिदप्यप्रसिद्धेर्विरोधाभावात् । कल्पसूत्राणां प्रत्यक्षश्रुतिसरूपत्वेपि न वेदत्वं किं तु दृढकर्तृस्मरणात्पौरुषेयत्वमिति भाष्यम्। यद् ब्राह्मणानीतिहासान्पुराणानि कल्पानिति नित्ये ब्रह्मयज्ञे ब्राह्मणवदितिहासादीनां विनियोगान्नित्यानित्ययोः संयोगायोगादेतान्यपि नित्यानि स्वातन्त्र्येण वेदवत्प्रामाण्यमेषाम् । एवं मन्त्रब्राह्मणयोर्वेदनामधेयम् षडङ्गमेके-इति मन्त्रवत् शिक्षादीनां वेदत्वस्मरणात्स्वातन्त्र्यमिति पूर्वः पक्षः । दृढकर्तृस्मरणादेव तेषामपि पौरुषेयत्वात्स्मृतिवद्वेदमूलकत्वेनैव प्रामाण्यं, न स्वातन्त्र्येण । नित्यकर्मयोगस्त्वेषां प्रतिकल्पं वर्णानुपूर्वीभेदेपि जातिशब्दवदर्थानां नित्यत्वाज्ज्ञेयः । षडङ्गमेक इति पूर्वपक्षोपन्यासो, न तु सिद्धान्तः, दृढकर्तृस्मरणादेवेति वार्तिकम् । मानवादिस्मरणानां होलाकाद्याचाराणां चाध्येतृविशेषेषु देशविदेशेषु च परिग्रहो दृश्यमानोपि नासौ श्रुतिमूलकः, तादृशश्रुतिकल्पने प्रमाणाभावात् । तस्मादेषां व्यवस्था नास्ति परंपरया यथाप्राप्तं तथानुष्ठेयमित्यर्थः ।

व्याकरणस्मृतिप्रामाण्याद्गवाद्या एव साधवो न गावीगोणीगोतागोपोतलिकेत्यादयस्तेषामशक्तिजापभ्रंशरूपत्वात् प्रयोगचोदनाभावात्, अर्थैकत्वमविभागादित्यत्र एवं वेदे शब्दः प्रयोक्तव्यः एवं लोक इति विशेषशास्त्राभावाल्लोकवेदयोः पदैकत्वं च । य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चामीषामर्था इति स्थितम् । तत्र—

(१) ()एतच्छृङ्खलान्तर्गतः ' शिष्टैरादृतत्वाच्च ' त्यतः परं कपुस्तकेऽस्ति ।

पदावधारणोपायान्बहूनिच्छन्ति सूरयः ।
क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृतीरिति वचनात्
यत्र जराराजादौ क्रमान्यत्वम्, तत्र तदवशादर्थभेदः। तथा ब्राह्मणादौ न्यूनातिरिक्तवर्णवशात्।इन्द्रशत्रुरित्यादौ आद्युदात्तत्वे इन्द्रः शातयितास्येत्यर्थः, अन्तोदात्तत्व इन्द्रस्य शातयितेति स्वरभेदात्। गच्छत इत्यस्य पदस्य देवदत्तयज्ञदत्तौ देवदत्तस्य चैत्रमैत्रदेवदत्तानिति पदान्तरसमभिहारे सति तिङन्तद्विवचनत्वं सुबन्ते षष्ठ्येकवचनान्तत्वं द्वितीयाबहुवचनान्तत्वं वा भवति। यन्नाहीयत तदहीनस्याऽहीनत्वम् अह्नः खः क्रतौविति श्रुतिस्मृता तु अहीनपदस्यार्थभेदके (दिके) न हीनो अहीनः अह्नां समूहोऽहीन इति। देवासः त्मनेत्यादौ क्वचित्पदभेदेपि अभेद एव एकदेशन्यूनाधिकत्वेपि तदेवेदं पदमिति प्रत्यभिज्ञानादभेदज्ञापकानुशासनाच्च। अतः सिद्धो लोकवेदयोः पदानां तदर्थानां चाभेदः॥ शब्दार्थस्त्वाकृतिरेव व्यक्तेर्लक्षणयाऽऽक्षेपसम्भवान्न वाच्यकोटावनुप्रवेशः। एवं विधीनां स्वातन्त्र्येणार्थवादमन्त्रयोस्तत्स्तुतिस्मृत्यर्थत्वेन स्मृतीनां तन्मूलत्वेन च प्रामाण्यं दर्शितम् ॥ ३ ॥

( इति तृतीयः पादः ॥ )

उद्भिदा यजेतेत्यादावुद्भिदादिपदानामपि वेदावयवत्वात्प्रसक्तं प्रामाण्यम् । तत्किं गुणविधित्वेन यागनामधेयत्वेन वेति चिन्त्यते । तत्राद्ये उद्भिदा यजेत बलभिदा यजेतेत्यादावुद्भिद्वता यागेनेष्टं भावयेदिति मत्वर्थलक्षणादोषान्नामधेयत्वम्। सोमेन यजेतेत्यादौ तु सोमशब्दस्य लतायां रूढत्वात् यागनामत्वासम्भवेनाऽगत्या सोमवतेति लक्षणाश्रयणम् । अत्र तूद्भिदादिपदार्थस्य लोकाप्रसिद्धत्वान्न तद्युक्तम् । तथा दधि मधु घृतं पयो धाना उदकम् तण्डुलास्तत्संसृष्टं प्राजापत्यमिति प्रकृत्य चित्रया यजेत पशुकाम इति प्राप्तकर्मानुवादेन चित्रत्वस्त्रीत्वलक्षणगुणद्वयविधाने

२

वाक्यभेदात्। नामधेयत्वे तु प्रकृतयाग एव फलान्वयान्न कश्चिद्दोष इति चित्रापदमपि यागनामधेयम्। अग्निहोत्रं जुहुयादित्यत्र अग्नये होत्रं यस्मिन्निति व्युत्पत्त्याऽग्निरूपगुणविधानम् वाक्यात्, धात्वर्थविधानं तु सन्निहिततरम्। न चाऽत्राग्निपदमनन्यगतिकम्, उक्तव्युत्पत्त्यैव तस्य धात्वर्थनामावयवत्वसम्भवात्। अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति मन्त्रलिङ्गं विधित्सितस्य गुणस्य प्रख्यापकमन्यच्छास्त्रमस्ति। अतोऽग्निहोत्रपदमपि कर्मनामधेयम्। श्येनेनाभिचरन्यजेतेत्यत्रापि यथा ह[१] वै श्येनो निपत्यादत्त एवमयन्द्विषन्तम्भ्रातृव्यन्निपत्यादत्त इति श्येनवद्व्यपदेशाच्छ्येनपदमन्यत्ररूढमपि यागनामधेयमेव, न गुणविधिपरम्। वाजपेयेन स्वाराज्यकामो यजेतेत्यत्रोक्तनिमित्तचतुष्टयाभावेपि वाजं सुराद्रव्यं पेयमस्मिन्निति न गुणविधानं, विरुद्धत्रिकद्वयापत्तेर्वाक्यभेदावश्यम्भावेन तत्र सम्बन्धायोगात् नहि सकृदुच्चरितः प्रत्ययो धात्वर्थस्य युगपत्फलेन वाजेन च सम्बन्धङ्कर्तुमीष्टे। तथा हि वाजेन यागं यागेन स्वाराज्यमित्यन्वये यागस्य फलं प्रति विधेयत्वम् उपादेयत्वङ्गुणत्वञ्च वाजगुणं प्रति अनुवाद्यत्वं उद्देश्यत्वम्प्रधानत्वञ्च. तत्र विधेयत्वादित्रयं ज्ञाप्यमनुष्ठेयं शेषभूतञ्च। अनुवाद्यत्वादित्रयं ज्ञातमननुष्ठेयं शेषिभूतञ्चेति नैकस्मिन् ज्ञाप्यत्वज्ञातत्वादिके सम्भवतः, मिथोविरुद्धत्वात्। पूर्वेष्वप्यऽयन्दोषोनुगतो ज्ञेयः। तमभ्युपेत्यैवाधिकदोषविवक्षयात्र विचारः प्रवर्तितः।[२]तस्मान्नामधेयं वाजपेयपदमिति सिद्धम्। यद्यप्येवंजातीयकेषु वाक्यभेदो दोषस्तथापि यत्रापूर्वं कर्म विधीयते तत्रानेकगुणविशिष्टमपि तद्विधीयते। विशिष्टस्यैकत्वाच्च न वाक्यभेदो दोषावहः। यथोक्तम्—

(१) खपु० हेति नास्ति।
(२) अनुगतः। तमभ्युपेत्यैव विचारः प्रवर्त्तितो ज्ञेय इति ख०।

प्राप्ते कर्माणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ इति ।

यथा यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पूर्णमायां[1]-स्याच्युतो भवतीति ताव ऽब्रूतामग्नीषोमावाज्यस्य नावुपांशु पौर्णिमास्यां यजन् ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामित्या दौ युगपद्द्रव्यदेवताकालोपांशुत्वादिगुणविशिष्टकर्मविधानेपि न दोषः । बर्हिराज्ययूपाहवनीयादिशब्दा वैदिकप्रसिद्ध्या संस्कार-निमित्ता अपि व्रीह्यादिवज्जातिशब्दा एव प्रोक्षणीनिर्मन्थ्य-शब्दौ तु योगरूढावेव । चातुर्मास्येषु आग्नेयमष्टाकपालं निर्व-पेत्सौम्यं चरुं सावित्रं द्वादशकपालं[2] सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्व-देवीमामिक्षां द्यावापृथिव्यमेककपालमित्यस्य सन्निधौ श्रूयते वैश्वदेवेन यजेतेति । तत्र वैश्वदेवपदं छत्रिन्यायेनाष्टानां यागानां नामधेयमिति ।[3] यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदे-वत्वमिति योगादष्टाना[4]मप्येतन्नामधेयम् । एषां च नाम्नां वैश्वदेवेन यक्ष्य इत्येवमादिव्यवहारसिद्धावुपयोगः । एवं वरुण-प्रघाससाकमेधशुनासीरशब्दा अपि समुदायानामेवानुवादकाः वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति यत् त्रिकपालस्त्रिवृतैवास्मिंस्तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेका-दशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद् द्वादशकपालो ज-गत्यैवास्मिन्पशून्दधाति यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव ते-

(१) अमावास्यायां पूर्णमास्यां चेति ख० ।
(२) निर्वपेदित्यधिकं क० ।
(३) तथेत्यधिकं ख० ।
(४) अष्टाकपालाना मिति क० ।

जस्य्ऽस्माद इन्द्रियावी पशुमान्भवतीति। अत्र जातपदोपेतोपक्रमोपसंहारैकरूप्यादेकवाक्यत्वावगतेरुत्पत्तिशिष्टगुणावरुद्धे उत्पन्नशिष्टस्य निवेशायोगादष्टाकपालादिवाक्यं न कर्मान्तरविधिर्न वा पूर्वस्मिन्नेव कर्मणि गुणान्तरविधिः, किन्तु द्वादशकपालस्यैवावयवद्वारा स्तुतिः। कर्मवत्कर्माङ्गान्यपि केनचित्सामान्येन स्तूयन्ते इत्याह। तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवायादिति। यजमानः प्रस्तर इत्यत्र यजमानकार्यकारित्वात्प्रस्तरे यजमानशब्दः। अग्निर्ब्राह्मण इत्यादौ ब्राह्मणेऽग्निशब्दस्तेन सहैकयोनित्वात् मुखादग्निरजायत ब्राह्मणोऽस्य मुखमासीदिति लिङ्गात्। आदित्यो यूप इत्यादावूर्द्ध्वत्वसारूप्यादञ्जनदेशे[1] भास्वरत्वसारूप्याद्वा यूपे आदित्यशब्दः। अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वा इत्यत्र गोश्वव्यतिरिक्तेष्वजादिष्वऽपशुत्वोक्तिर्गवादेः प्राशस्त्यदर्शनार्था। सृष्टीरुपदधातीत्यादौ सृष्टिसंज्ञकानामिष्टकानां बहुत्वात्सृष्ट्यसृष्टिसमुदाये सृष्टिशब्दो भूमगुणयोगात्। प्राणभृत उपदधातीत्यत्र तु अप्राणभृत्संज्ञकानामिष्टकानां बहुत्वेपि च्छत्रिणो गच्छन्तीतिवल्लिङ्गसमवायमात्रेण प्राणभृदप्राणभृत्समुदाये प्राणभृच्छब्दः। संदिग्धेषु[2] वाक्यशेषात्। अक्ताः शर्करा उपदधातीत्यत्राञ्जनसाधनद्रव्यसंदेहे तेजो वै घृतमिति वाक्यशेषात् घृतेनाक्ताः शर्कराः कर्तव्या इति निर्णयोपि द्रव्यस्तुतिप्रयोजनम्। अर्थाद्वा कल्पनैकदेशत्वात्। यत्र निर्णायकोर्थवादोपिनास्ति तत्राख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीतिन्यायेन यथा प्रासादे भुङ्क्ते कांस्ये भुङ्क्त इत्यत्र प्रासाद उपविश्य कांस्ये परिविष्येत्यर्थात् प्रतीयते, न तु विपरीतम्। एव

---

(१) देशोनामदाने।
(२) अत्र खपु० च-इत्यधिकम्।

स्त्रेणावद्यतीतिविधिः सामर्थ्याद् द्रवद्रव्यविषये, स्वधितिनावद्यतीति मांसविषये, हस्तेनावद्यतीति च पुरोडाशविषये व्यवतिष्ठते॥४॥

( इति चतुर्थः पादः । )

इति नीलकण्ठसूरिसूनुगोविन्दविरचिते भाट्टभाषाप्रकाशे प्रथमो ऽध्यायः ॥ १ ॥

---

भावार्थाः कर्मशब्दा इति । विध्यर्थवादमन्त्रनामधेयस्मृत्याचाराख्यानि धर्मे प्रमाणानि षण् निरूपितानि, इदानीं तत्स्वरूपभेदः शब्दान्तराभ्याससंख्यासंज्ञागुणप्रकरणान्तरैः षड्भिः प्रमाणैः प्रतिपाद्यते । तस्य चोत्पत्तिश्चोदनावाक्यगतेभ्यः सर्वेभ्यः पदेभ्य इति न, गौरवात् किंतु लाघवादितरविशेषितादेकस्मादेव पदात्। तत्रापि क्रियापदादेव, तस्या एव फलसिद्धौ प्रधानत्वात् नतूपपदात्। अन्यथा सोमेन यजेतेत्यादौ श्रुतद्रव्यापचारे पूतीकादिः प्रतिनिधिर्न स्यात् । गुणे ह्यऽन्याय्यकल्पना सम्भवति, न प्रधाने। अतो धात्वर्थादेव धर्मोत्पत्तिः । स च देवतोद्देशेन द्रव्यत्यागात्मकमानसक्रियात्वाद्यद्यप्याशुतरविनाशी, तथापि दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेतिश्रुतार्थापत्त्या यागावान्तरव्यापाररूपापूर्वनाम कालान्तरभोग्यफलप्रातिभूत्वेन कल्प्यते, भोक्ता च देहादन्यस्तत एव सिद्धयति। अपूर्वाणि तु अमावास्यायोगिभ्यस्त्रिभ्यः प्रधानेभ्यस्त्रीणि प्रथममुत्पद्य पश्चात्समुदायापूर्वमारभन्ते । एवं पौर्णमासेऽपि अपूर्वत्रयादेकं समुदायापूर्वम्। ताभ्यां पुनः परमापूर्वं जन्यते । अङ्गापूर्वाणि तत्रैवोपकुर्वन्तीति। तत्राप्यवघातादीनां दृष्टार्थानां नियमांशेनैवापूर्वोत्पादकत्वम् । प्रोक्षणादीनां तु दृष्टार्थत्वाभावात्केवलमपूर्वार्थत्वमेव । एवं स्तोत्रशस्त्रयोरपि । तत्र ह्याज्यैः स्तुवते प्रउगं शंसतीति श्रुत्या स्तवनस्यैव कर्तव्यताप्रतीतेर्याज्यादिना तयोर्देवता-

स्मरणादिदृष्टकार्यार्थत्वायोगात्। प्रगीतमन्त्रसाध्यं स्तवनं स्तोत्र, मप्रगीतमन्त्रसाध्यं तदेव शस्त्रम्। एवं ब्राह्मणस्थमेवाख्यातं प्रधानकर्म वा गुणकर्म वा विधत्ते न तु देवांश्च याभिर्यजते ददाति चेत्यादिमन्त्रस्थम्। प्रयोगाङ्गानां मन्त्राणां प्रयोगवाहि भूते विधावत्सामर्थ्यात्[1]। यत्राभियुक्तानां मन्त्रप्रसिद्धिस्ते मन्त्राः। अन्यद्ब्राह्मणम्। तत्रापि ऊहप्रवरनामधेयानां न मन्त्रत्वम्, प्रसिद्ध्यभावादेव। ऋग्यजुःसामानि प्रसिद्धान्येव। पादबन्धवत्यृक्। अनियताक्षरपादं यजुः। गीतिः सामेति। प्रोक्षणीरासादयेत्यादयो निगदाः पादबन्धप्रगीतमन्त्रत्वाभावेन ऋक्साम(मा)भ्यामन्यत्वाद्यजुःष्वेवान्तर्भवन्ति। यजुःप्रमाणं तु यावत्साकाङ्क्षमेकार्थं पदजातं तावदेव। यथा स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामीति सदनकरणार्थमेकं यजुः। तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान इति पुरोडाशासादनार्थमपरं यजुः। अन्यथा यजुश्छेदे[2] उभयोरपि वाक्ययोरसंगतार्थता स्यादिति निश्चीयते। इषे त्वेत्यादावाकाङ्क्षानिवर्त्तकपदं यद्यपि नास्ति तथापि इषे त्वेति शाखां छिनत्त्यूर्जे त्वेत्यनुमार्ष्टीतिविनियोगबलान्मन्त्रभेदश्छिनद्मीत्त्याद्यध्याहारेणवाक्यपूरणं च। या ते अग्ने ऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीत् त्वेषंवचोअपावधीत्स्वाहेति संपूर्णार्थमन्त्रमाम्नाय श्रूयते या ते अग्ने रजाशयेति, या त अग्ने हराशयेति। अनयोः साकाङ्क्षयोराकाङ्क्षापूरणं तनूरित्यादिना भवितुं युक्तमिति तदेवानुषञ्जनीयम्। अश्रुतकल्पनापेक्षया सन्निहितश्रुतानुषङ्गस्य लघुत्वात्। चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनात्वित्यनयोर्निराकाङ्क्षयोरपि देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेणे-

(१) विधानसामर्थ्यादिति ख०।

(२) यजुश्छन्दे-इत्युभयपुस्तकपाठः। तत्र छन्दपदार्थः स्वाच्छन्द्यं स्यात्।

युत्तरमन्त्रगतो वाक्यशेषोऽच्छिद्रेणेत्यादिः योग्यतया सम्ब-न्धुमर्हतीति तत्राप्यनुषञ्जनीयः। असम्बद्धपदव्यवधाने तु नानु-षङ्गः सं ते वायुर्वातेन गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशि-षेत्यादौ गच्छतामित्येकवचनस्याङ्गानीति बहुवचनेन सम्बन्धान-र्हत्वात् तद्व्यवायाच्चाशिषेत्यत्रापि नानुषङ्गः सध्यतामिति तदेवमुपो-द्घातं तत्प्रसक्तानुप्रसक्तं च समाप्य लक्षणार्थभेदमुदाहरति ॥१॥

( इति द्वितीयाध्यायस्य प्रथमः पादः )

शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्। यजति ददाति जुहोतीत्यादौ धात्वर्थभेदात्कर्मभेदः। समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजतीत्यादावेक-स्यैवाख्यातस्याऽसकृच्छ्रवणरूपादभ्यासात्कर्मभेदः, न तु समिदादिगुणात्। तस्य समिधो अग्न आज्यस्य व्यन्त्वित्या-दिमन्त्रलिङ्गप्राप्तत्वात्। अप्राप्तो हि गुणः पूर्वत्र निवेशमऽल-भमानो गुणिनं भिनत्ति। न तु प्राप्तस्ततो यजतिशब्दस्याभ्यास एवात्र कर्मभेदकः पूर्वोदाहृतानि यदाग्नेयोष्टाकपाल इत्यादीनि समिध इत्यादीनि वाक्यानि पठित्वाम्नायते य एवं विद्वानमावास्यां यजते य एवं विद्वान्पौर्णमासीं यजत इति। अत्र न कर्म विधी-यते तत्स्वरूपस्य द्रव्यदेवतस्याभावात्। किं तर्हि अमावास्या-पौर्णमासीशब्दाभ्यां तत्तत्कालविहितौ समुदायावनूद्येते। अनु-वादप्रयोजनं तु अमावास्यायाममावस्यया यजेत पौर्णमास्यां पौर्णमास्या दर्शपूर्णमासाभ्यां[1] स्वर्गकामो यजेतेत्यादि।

अत्र विधिश्चतुर्विधः। उत्पत्त्यधिकारविनियोगप्रयोगभेदात्। तत्र कर्मस्वरूपमात्रावगमको विधिरुत्पत्तिविधिः, यदाग्नेयोष्टाक-पाल इत्यादिः। फलसंबन्धबोधको विधिरधिकारविधिः चित्रया यजेत पशुकामः सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ सर्वेभ्योग्निष्टोम

(१) पौर्णमासेति क०।

इत्यादिः । व्रीहिभिर्यजेत यवैर्यजेत यवैर्यजति समिधो यजति तनूनपातं यजतीत्यादिरङ्गसंबन्धबोधको विधिर्विनियोगविधिः । अत्र व्रीहियवादीनां दृष्टार्थानां विकल्पः, समित्तनूनपादादीनामदृष्टार्थानां समुच्चयः । यद्यपि विकल्पे ऽष्टौ दोषा, स्तथापि वाक्यद्वयस्य समबलत्वादन्यतरेणेतरबाधायोगादगत्यांङ्गीक्रियते । ते च व्रीह्युपादाने व्रीह्यंशे स्वीकृतप्रामाण्यत्यागः, अस्वीकृतस्य प्रामाण्यग्रहः, यवांशे स्वीकृतप्रामाण्यत्यागः अस्वीकृतप्रामाण्यग्रहः । एवं यवोपादानेपि । साङ्गप्रधानानुष्ठापको विधिः प्रयोगविधिः स च क्वचित्क्वचित् कल्प्यते औपदेशकैरातिदेशिकैश्चाङ्गैः समवेतं चित्राख्यं यागं कुर्यादिति । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत योऽग्निष्टोमेन स्वर्गकामो यजेतेत्यादिस्तु स्वर्गकामपदं सर्वेभ्य इतिप्राप्तस्याऽवयुत्यानुवाद इति पक्षमाश्रित्य श्रौतः ।

स पुनस्त्रिविधः अपूर्वविधिर्नियमविधिः परिसंख्याविधिश्च । तत्र यो मानान्तरेणात्यन्ताप्राप्तस्यार्थस्य विधायकः स आद्यः यथा व्रीहीन्प्रोक्षतीति । नह्येनं विना प्रोक्षणं व्रीहिषु कथंचिदपि प्राप्नोति । लोकाद्वेदतो वा यत् पक्षप्राप्तं तस्याप्राप्तांशपरिपूरणफलो द्वितीयः यथा व्रीहीनवहन्तीति । यथा वाग्रयणे व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेताऽयवेभ्यः यवैरिष्ट्वा यवैरेव यजेताव्रीहिभ्य इति । आद्ये तण्डुलानिष्पत्त्याक्षेपादवघातवन्नखविलनस्यापि लोकावगतकारणत्वाविशेषात् प्राप्तौ अवघाताऽप्राप्तांशोस्ति । द्वितीये पूर्वोदाहृतव्रीहियववाक्याभ्यां व्रीह्याग्रयणादूर्द्ध्वमपि पक्षे यवप्राप्त्या व्रीह्यप्राप्तांशोस्ति, तत्परिपूरणे त्वितरनिवृत्तिरर्थाद्भवतीति व्रीहिभिरेवेत्येवकारोनुवादः । वदेतो लोकतो वा समुच्चित्यप्राप्तयोरितरनिवृत्तिफलको विधिस्तृतीयः यथा इमामगृभ्णान् रशनामृतस्येत्यश्वाभिधानीमादत्त इति पञ्च

पञ्चनखा भक्ष्या इति च । अग्निचयने इष्टकानयना[1]र्थमश्वरशना-
ग्रहणं गर्दभरशनाग्रहणं चेति द्वयमनुष्ठेयम्, तत्रोभयत्रायं मन्त्रो र-
शनाग्रहणप्रकाशनसामर्थ्यरूपाल्लिङ्गादेव प्राप्त इति नाऽश्व-
रशनाग्रहणाङ्गत्वं प्रतीयते ऽपि तु गर्दभरशनातो व्यावृत्तिरेवा-
ऽगत्या दोषत्रयं सोढ्वाप्यङ्गीक्रियते विधिवैयर्थ्यपरीहाराय। दोष-
त्रयं च श्रुतस्याश्वरशनाग्रहणाङ्गत्वस्य त्यागः, अश्रुतस्य गर्दभर-
शनाङ्गत्ववर्जनस्य ग्रहणं, मन्त्रलिङ्गात्तसामान्यतः प्राप्तस्य गर्दभर-
शनाङ्गत्वस्य त्याग इति श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति
सर्वत्र परिसंख्यायां दोषत्रयं ज्ञेयम् ॥

एवंभूतैर्विधिभिर्विहितं कर्म द्विविधं गुणकर्मार्थकर्मभेदा-
त् । तत्र यत् क्रतुकारकमाश्रित्य विधीयते तदाद्यम्, उत्पत्त्या-
प्तिविकृतिसंस्कृतिरूपफलभेदाच्च चतुर्विधम् । वसन्तेग्नीनादधीत
यूपं तक्षति । अत्राधानतक्षणादिसंस्काराभ्यामग्नियूपयोः प्रा-
गसतोरुत्पत्तिः फलम् । एवं पिष्टानि संयौतीत्यत्र संयवनस्य
पिण्डोत्पत्तिः । स्वाध्यायोध्येतव्यः गां दोग्धीत्यादावध्ययन-
दोहनाभ्यां सिद्धयोरेव स्वाध्यायपयसोः प्राप्तिः । सोममभिषु-
णोति व्रीहीनवहन्ति दक्षिणाग्नावाज्यं विलापयतीत्यादौ क-
ण्डनादेः सोमादिपूर्वरूपपरित्यागेन रूपान्तरापत्तिर्विकृतिः । च-
तुरो मुष्टीन्निर्वपति व्रीहीन्प्रोक्षतीत्यादौ निर्वापप्रोक्षणाभ्या-
मपूर्वीयेषु व्रीहिषु अदृष्टरूपं गुणाधानं दोषापकर्षणं वा संस्का-
राख्यं क्रियते तस्य फलं तेषु योग्यत्वसिद्धिः । दृष्टरूपोपि सं-
स्कारः पुरोडाशानलं करोति तण्डुलांस्त्रिः प्रक्षालयतीत्यादिः ।
क्रतुकारकमनाश्रित्य यद्विधीयते तदर्थकर्म ।

---

(१) चयनार्थमिति खपु० ।

तच्च द्विविधम् अन्यार्थमङ्गमनन्यार्थं प्रधानं च । अङ्गमपि द्विविधं सन्निपत्त्योपकारकमाऽऽरादुपकारकं च । तत्र प्रधाने क्रतुरूपे [यत्] स्वरूपेणोपकारकं तदाद्यम् यथा व्रीह्यादि । यत्क्रत्वपूर्वं उपकरोति तद् द्वितीयम् यथा प्रयाजादि । अनन्यार्थमपि द्विविधम् प्रकृतिरूपं विकृतिरूपं च । तयोर्यत्सन्निधौ सर्वाण्यङ्गानि विधीयन्ते तत्प्रथमम् दर्शपूर्णमासज्योतिष्टोमादि । यदङ्गं विकलं विधीयते तद् द्वितीयं सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः विश्वजिता येजेतेत्यादि । तत्र प्रथमे कथंभावपूरणं तस्य संनिधौ पठितैरेवाङ्गैर्भवति । द्वितीये तु प्रकृतिवद्विकृतिः कर्त्तव्येति कल्पितेनातिदेशवाक्येनेति [वि] शेषः । अग्निहोत्रादीनि तु दर्वीहोमाख्यानि प्रधानकर्माणि न तानि कस्यचित्प्रकृतिर्विकृतिर्वा भवन्ति किंत्वऽपूर्वाण्येव । तान्यपि कर्माणि त्रिविधानि नित्यनैमित्तिककाम्यभेदात् । यावज्जीवादिचोदनाचोदितं नित्यम् । यावज्जीवमग्निहोत्रं जुहुयात् यावज्जीवं दर्शपूर्णमासाभ्यां यजेत वसन्ते वसन्ते ज्योतिषा यजेत, ज्योतिषा ज्योतिष्टोमेन, अहरहः संध्यामुपासीत तानेतान्यज्ञानहरहः कुर्वीतेत्यादि । निमित्तानन्तरं कर्त्तव्यं नैमितिकम् वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इत्यादि । प्रायश्चित्तमप्यत्रैवान्तर्भवति । तच्च द्विविधं क्रतुभ्रेषनिमित्तं पुरुषभ्रेषनिमित्तं च । आद्यमऽग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां पौर्णमासीं वातिपातयेदित्यादि । यो ब्रह्मचारी अवकिरेत्स नैर्ऋतं गर्दभमालभेतेत्यादि द्वितीयमित्यलं प्रसक्तानुप्रसक्तोक्त्या, प्रकृतमनुसरामः ।

यथा य एवमितिविद्वद्वाक्ये पौर्णमासीपदेनाग्नेयादित्रिकस्यानुवाद एवमुपांशुयाजमन्तरा यजतीत्युपांशुयाजपदेन विष्णुरुपांशु यष्टव्यो ऽजामित्वायेत्यादिवाक्यविहितविष्ण्वादित्रिक-

स्यानुवादोस्त्विति न युक्तम्, जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावित्युपक्रान्तजामितादोषपरिहार एकेनापि भवति जामि वा इत्यजामित्वायेति च श्रूयमाणोपक्रमोपसंहारैक्यरूपा वा तस्यैकवाक्यत्वस्य यात्रय[1] कल्पनया भङ्क्तुमयुक्तत्वात् । ननु द्रव्यदेवतं यागस्वरूपमत्र वाक्ये नास्ति यष्टव्यवाक्ये तु देवतामात्रमस्तीति अत्रैव यागोत्पत्तिरिष्टेति चेन्न । सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमिति ध्रौवाज्यलाभस्योभयत्रापि तुल्यत्त्वात् । आग्नेयाग्नीषोमीययाज्यानुवाक्यायुगलयोरन्तराले पठिताद्याज्यानुवाक्यायुगलाच्च देवतालाभ इति न किंचिद् दुःस्थम् । यष्टव्यवाक्यं तु स्तुतिमात्रम् ईदृशोयमुपांशुयाजो यत्र विष्णुरिज्यते इति तत्र विष्णुनाग्नीषोमौ प्रजापतिश्च विकल्पते । एवमन्यत्रापि कर्मभेदार्थः पूर्वः पक्षः, तदभेदार्थः सिद्धान्त इति ज्ञेयम् । तिस्र आहुतीर्जुहोतीत्यत्र बहुत्वात्संख्यायाः स्पष्ट[:]कर्मभेद इति सप्तदश प्राजापत्यान्पशूनालभत इत्येवोदाहरणे प्रजापतिर्देवता येषामिति विग्रहे सप्तदशपशुद्रव्यको यागः । प्राजापत्यश्च प्राजापत्यश्चेति श्रुततद्धितान्तानामेकशेषे प्रतिपशु प्राजापत्यत्वपर्यवसानात्सप्तदश यागाः, प्रकृतौ त्वेकः । पशुनिष्पन्नैकादशावदानद्रव्यत्वं यागस्य दृष्टम्, तत्सामान्यादतिदेशादिहापि प्राप्तं न प्रत्याख्यातुं शक्यम् । अतः सप्तदशैव यागाः । फलं तु पूर्वपक्षे एकपशुनाशे गणनाशः । सिद्धान्ते तन्मात्रस्यैव नाश इति तस्यैव पुनरुपादानं नान्यस्येति । प्रदानं तु देशकालकर्त्रैक्यात् सर्वेषां सहैव दधिपयसोरपि प्रकृतौ । एवमेव ज्योतिष्टोमं प्रकृत्य अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेत्यादौ न पूर्व-

---

(१) ऐकरूप्येण तस्यैकवाक्यत्वस्य यागत्रयेति सँभाव्यते पाठः, कपुस्तकस्यात्र द्वितीयाध्यायपर्यन्तं खण्डितत्वात् ।

त्रैव सहस्रदक्षिणागुणविधिः। ज्योतिरादिपदानामानर्थक्यापातात् संज्ञाश्रुत्यार्थान्तरावश्यम्भावेन प्रकरणविच्छेदावश्यंभावाच्च ज्योतिरादिसंज्ञानि कर्मान्तराण्येवैतानि। वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति वैश्वदेवयागे उत्पत्तौ आमिक्षया ऽवरुद्धे उत्पन्नशिष्टं वाजिनं निवेशमलभमानं ततोऽन्यद्वाजिदेवत्यं वाजिनद्रव्यकं कर्मोपस्थापयतीति गुणात् कर्मभेदः। यत्र तूत्पत्तौ निर्गुणं कर्म श्रूयते पश्चादनेके गुणाश्च श्रूयन्ते तत्र सर्वेषां गुणानां विकल्पेन निवेशो न तु कर्मभेदकत्वम् यथा ऽग्निहोत्रं जुहोतीत्यत्र दध्ना जुहोतीत्यादीनाम्। अग्निहोत्रं प्रकृत्य श्रूयते दध्नेन्द्रियकामस्य जुहुयादिति तत्र धात्वर्थस्य प्राप्तत्वाद्गुणमात्रं विधेयम् यच्च विधेयम्, तस्यैव फलम्। अतो ऽत्र पूर्वस्मिन्नेव कर्मणि फलाय गुणो विधीयते न तु गुणः कर्म भिनत्तीति। अग्निष्टुति वारवन्तीयमग्निष्टोमसाम कार्यमित्युक्त्वा ऽऽम्नायते एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा ह्येतेन पशुकामो यजेतेति। अत्र पूर्वस्मिन्नेव कर्मणि रेवत्यृगाधारवारवन्तीयलक्षणो गुणः पशुफलाय विधातुं न शक्यते दधिवदऽस्य प्रसिद्धत्वाभावात्। ततश्च प्राप्तकर्मानुवादेन गुणस्वरूपं तत्फलं चेत्युभयं विधातुमशक्यम्, वाक्यभेदात्। तस्मात्कृत्वाशब्दकल्पितरेवतीवारवन्तीयसम्बन्धविशेषितः पूर्वोक्तफलाय विधीयते। एतस्येति षष्ठ्यन्तमपि प्रस्तूयमानमिति न तु पूर्वप्रकृतमित्यपि सिद्धम्॥ २॥

(इति द्वितीयाध्याये द्वितीयः पादः॥)

यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यदि बृहत्सामा शुक्राग्रानिति प्रकृते ज्योतिष्टोमे ग्रहाग्रत्वमात्रं विधीयते। न तु ततोन्यत्कर्म रथन्तरसामादिकम्। विधिशक्त्युपघातकयदिशब्दात् प्रकरणविच्छेदात्। राजा राजसूयेन स्वाराज्यकामो यजेतेत्यत्र राजशब्दस्य क्षत्रियवाचित्वात् तन्मा-

ऽधिकारिकायामपि राजसूयान्तर्गतायामवेष्टिसंज्ञयामिष्टौ ह्यादित्य-ऽन्नाद्यकामब्राह्मणादीनामप्यवेष्टिं प्रापयति। एवं वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः शरदि वैश्यः वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमित्येतान्यपि वचनानि यथावर्णमाधानोपनयनयोः प्रापकाणि॥ कुण्डपायिनामयनाख्ये सत्रे उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमासाभ्यां यजेतेत्यत्रापि नैयमिकाग्निहोत्रादेः सत्रे उपस्थित्यसंभवाच्छब्दमात्रेणोपस्थित्यभ्युपगमेऽपि प्राप्तकर्मानुवादेन उपसदानन्तर्यं मासगुणश्चेति विधातुमशक्यम्, वाक्यभेदात्। नच प्राप्ते कर्मणि मासः संपादयितुं शक्यते अनुपादेयत्वात् तस्य। तस्मादनुपादेयगुणसंबन्धानुगृहीतो ऽसंनिधिः कर्म भिनत्ति। अनुपादेया गुणास्तु देशः कालो निमित्तं फलं संस्कार्यश्च (रश्च)। तच्च सरस्वत्या दक्षिणेन तीरेणाग्नेयोऽष्टाकपालः सत्रायागूर्य विश्वजिता यजेत आग्नेयमष्टाकपालं निर्वपेद्रुक्कामस् त्रैधातव्या दीक्षणीया इत्यत्रैवेति (?) क्रमेण कर्मभेदोदाहरणानि द्रष्टव्यानि। अत्र दार्शपौर्णमासिकादाग्नेयात् काम्यदैशिकावाग्नेयौ भिन्नौ काम्याभ्यां त्रैधातवीविश्वजिद्भ्यां संस्कारकनैमित्तिकौ तौ भिन्नौ सर्वत्रानुपादेयगुणगणविशेषितासन्निधिरूपप्रकरणान्तरस्य कर्मभेदहेतोस्तुल्यत्वात्। सन्निधौ त्वनुपादेयगुणसम्बन्धेपि न कर्मभेदः यथा समे दर्शपूर्णमासाभ्यां यजेत पौर्णमास्यां यजेत॥ ३॥

(इति द्वितीयाध्याये तृतीयः पादः॥)

यावज्जीवं दर्शपूर्णमासाभ्यां यजेत एतयान्नाद्यकामं याजयेत्। शेषात् स्विष्टकृते समवद्यतीति दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति विहितात्काम्यात्प्रयोगादन्योयं यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति पुरुषार्थः प्रयोगः। अग्निहोत्रं जुहोतीत्यादयो विधयः शाखाभेदान्न भिद्यन्ते शाखाभेदात् पुनःश्रुत्यनापत्तेः। एकस-

न्निधौ हि पुनःश्रुतिर्भेदिका समिधो यजतीत्यादौ नासन्निधावित्युक्तं प्राक् ॥ ४ पा० ॥

इति भाट्टभाषाप्रकाशे द्वितीयोऽध्यायः ॥२॥

---

एवं सिद्धे कर्मभेदे भिन्नानां तेषां शेषशेषिभावो निरूप्यते। शेषत्वं च नाविनाभूतत्वम्। आग्नेयादीनां त्रयाणामन्योन्यशेषतापत्तेः। नाप्युपकारकत्वम्। अङ्गमनुष्ठापयतः प्रधानस्यापि शेषतापत्तेः। अतो यः परार्थः स शेषः। पारार्थ्यं च यथायथं द्रव्यगुणकर्मणां वक्ष्यमाणानां व्रीह्याज्यदेशकालानां यागं प्रत्यस्ति एवं यागस्य फलं प्रति फलस्य च पुरुषं प्रति। तेन पूर्वः पूर्व उत्तरमुत्तरं प्रति शेषः। उत्तरउत्तरस्तु पूर्वपूर्वं प्रति शेषीति ज्ञेयम्। तत्रापि चतुरो मुष्टीन्निर्वपति व्रीहीन्प्रोक्षति व्रीहीनवहन्ति आज्यमुत्पुनाति शाखां छिनत्तीत्यादय औषधाज्यसान्नाय्यधर्मा योग्यतया व्रीह्यादियोगाच्चौषधादिष्वेव यथायोगं व्यवतिष्ठन्ते। अत्र व्रीह्यादिपदमपूर्वमद्रव्यलक्षकम्। अन्यथा यवादिभ्यः प्रोक्षणादिव्यावृत्त्यापत्त्या परिसंख्यात्वापत्तेः। यथेयं संस्कारव्यवस्था एवं स्फ्येनोद्धन्ति कपालेषु श्रपयति अग्निहोत्रहवण्या निर्वपति उलूखलमुसलाभ्यामवहन्ति शूर्पेण विविनक्ति दृषदुपलाभ्यां पिनष्टीत्यादावपि यथाश्रुतं द्रव्यव्यवस्था। यथेयं द्रव्याणां व्यवस्था गुणव्यवस्थाप्येवम्। अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीत्यादौ आरुण्यस्य क्रयान्वयेपि अमूर्तत्वात्स्वतः कारकीभवितुमशक्नुवानस्य (वतः) सन्निहितैकहायनीद्वारैव कारकत्वम् न व्यवहितेन वाससा क्रीणातीत्यादिवाक्यावगतवासआदिद्वारेति। एवं क्रमात्संस्कारे द्रव्यगुणविवक्षायामपि ग्रहं सम्मार्ष्टीत्यादौ ग्रहाद्युद्दिश्य सम्मार्गविधौ

उद्देश्यविशेषणीभूतमेकत्वं न विवक्षितम् । (ग्रहं संमार्ष्टि तं चैकमि-
त्यन्वये वाक्यभेदात्)[1] । तस्मात्सर्वेषु ग्रहेषु संमार्गः प्राप्नोति ।
ग्रहस्वरूपं तु विवक्षितमेव, उक्तदोषाभावात् । तेन न ग्रहपदं सोमपा-
त्रमात्रोपलक्षणमिति न चमसेष्वपि संमार्गप्राप्तिः । सप्तदशारत्नि-
र्वाजपेयस्य यूप इत्यत्र वाजपेयोद्देशेन सप्तदशारत्नित्वविधौ उद्दे-
श्यस्वरूपमप्यविवक्षितम् । तस्य स्वरूपे यूपस्याभावेनानुपयो-
गात् । नहि वाजपेयस्य यूपोस्ति किं तर्हि अनर्थकं सद् वाज-
पेयाङ्गभूतेषु पशुषु यूपोस्तीति तत्र साप्तदश्यं निविशते । स-
मिधो यजतीत्यारभ्य प्रयाजानिष्ट्वा हविष्यभिघारयतीत्यन्तं प्र-
याजावान्तरप्रकरणं तन्मध्यपठितमभिक्रामञ्जुहोतीत्यभिक्रमणं
प्रयाजाङ्गमेव । संदंशमध्यपतितं सत्र महाप्रकरणमनुगच्छतीति ।
सामिधेनीरन्वाहेत्यारभ्य अन्तरानूच्य सदेवत्वायेत्यन्तं सामिधेन्य-
वान्तरप्रकरणवद्वासमानमपि तन्मध्यपठितैर्देवोद्वोमन्विद्वे(?) इत्या-
दिभिलक्ष्मन्मन्त्रैः प्रकरणविच्छेदात्तन्मध्यपतितमपि यदुपव्ययते
देवाँनिविधेव तत्कुरुत इत्युपवीतं दर्शाद्यङ्गं वारणोयज्ञावचरो
वैकङ्कतो यज्ञावचर इति अनारभ्याधीतत्वादात्मकृतिद्वारा यज्ञ-
पदोदिताखिलयज्ञाङ्गत्वे पात्राणामाज्यभागगतयोर्वार्त्रघ्नलिङ्गक-
मन्त्रयोर्वृधन्वल्लिङ्गकयोश्च वार्त्रघ्नीः पौर्णमास्यां यजते वृधन्वती-
श्चामावास्यायामिति वाक्याद्विनियोगः । हस्तावनेजनादि सर्व-
कर्माङ्गम्, प्रकरणात् । पुरोडाशं चतुर्द्धा करोतीति सामान्यवच-
नमाग्नेयं चतुर्द्धा करोतीतिविशेषवचनेनोपसंह्रियते ॥ १ ॥

(इति तृतीयाध्याये प्रथमः पादः ॥)

यद्यपि मन्त्राणां मुख्ययैव वृत्त्या विधेयार्थप्रकाशकत्वं सर्वत्र
सिद्धम् तथापि ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यादौ तृतीयाश्रुत्या

---

(१) ( ) एतच्छृङ्खलान्तर्गतः पाठः खपुस्तके 'संमार्गः प्राप्नोती'त्यतः परं वर्त्तते ।

ऐन्द्रस्य लक्षणया गार्हपत्यप्रकाशकत्वमुपेयते। श्रुत्यपेक्षयेन्द्रप्रकाशनसामर्थ्यरूपस्य लिङ्गस्य दुर्बलत्वात् सूक्तवाकेन प्रस्तरं प्रहरतीतितृतीयाश्रुत्या इदं द्यावापृथिवी भद्रमभूदित्यादिमन्त्रगणस्य सूक्तवाकसंज्ञस्य प्रस्तरग्रहणाङ्गता गम्यते तेनाग्निरिदं हविरजुषतेत्यादिमन्त्रवर्णाद्देवता लभ्यते प्रस्तरो द्रव्यं प्रहरतियोगवचन इति लभ्यते। न चेष्टदेवताप्रकाशनेन कृतार्थस्य तस्य पुनर्विनियोगो न युज्यत इति तदुपलक्षिते काले स्रुग्धारणादौ कृतार्थस्य प्रस्तरस्य प्रतिपत्तिरत्र विधीयत इति वाच्यम्। किमिव वचनं न कुर्यान्नास्ति वचनस्यातिभार इतिन्यायेन कारकश्रुतेर्लक्षणापेक्षया बलवत्त्वेन च तत्सम्बन्धात्प्रहरतिरिष्टदेवतासंस्कारार्थहोमं विधत्ते इति कल्पनात्। सूक्तवाक्येनेति तृतीयया कृत्स्नस्य तस्य प्रहरणाङ्गत्वेपि लिङ्गवशात्पर्वद्वये विभज्य विनियोगः कल्प्यः। अन्यथा दर्शेग्नीषोमाविदं हविरितिमन्त्रोऽत्यन्तानर्थकः स्यात्। आनर्थक्यप्रतिहतानां विपरीतं बलाबलमितिन्यायेनात्र लिङ्गबलात् तृतीयाश्रुतिः सूक्तवाकैकदेशं लक्षयति। काम्यकाण्डे ऐन्द्राग्नादीन्यज्ञान्विधाय तल्लिङ्गकानि याज्यानुवाक्यायुगलान्याम्नातानि इन्द्राग्नी रोचना दिव इत्यादीनी तानि लिङ्गमात्रान्न सर्वत्र विप्लवन्ते किं तु क्रमसमाख्यावशात्स्वस्थान एव निविशन्ते। क्रमः स्थानं सन्निधिरित्येतदनर्थान्तरम्। भक्षे हि मा वेशेत्यादिर्भक्षणमन्त्रस्य भक्षानुवाकसमाख्यामात्रेण कृत्स्नानुवाकस्य न भक्षणार्थत्वं किं तु ग्रहणावेक्षणसम्यग्जरणादेरपि प्रकाशनाद्यथालिङ्गं ग्रहणादौ मन्त्रा व्यवतिष्ठते। भक्षमन्त्रे इन्द्रपीतस्येति पदमनैन्द्राणां सोमानां भक्षणे ग्रहं निवृत्तिं वा न भजते तद्धेतोरिन्द्रेण पीतस्येत्यस्यार्थस्याविवक्षितत्वात् किंतु इन्द्रेण पीतः सोमो यस्मिन्सवने तदिन्द्रपीतम् तस्य संबन्धिनं सोमं भक्षयामीत्यस्यार्थो विवक्षितः। ऊहलोपहेतोस्तृतीयातत्पुरुषादन्यपदार्थप्रधानस्यापि बहु-

व्रीहिसमासस्य लघुत्वात् । सर्वे च सोमा एवंविधसवनसम्बन्धिन इति सर्वेषां यथाम्नातमन्त्रकम्भक्षणम् ॥ २ ॥

(इति तृतीयाध्याये द्वितीयः पादः ॥)

श्रुतिलिङ्गयोर्विनियोग उक्तः वाक्यप्रकरणस्थानसमाख्याभिर्विनियोगश्चिन्त्यते। तत्र त्रयो वेदा अजायन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद इत्यर्थवादेनोपक्रम्य उच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्नेत्युच्चैस्त्वादिकं विधीयते। तत्र मन्त्रब्राह्मणसमुदायो वेदः पादबन्धवती गायत्र्यादिरेव ऋक् । असंजातविरोधिनोपक्रमगतवेदपदेन संजातविरोधिविध्युद्देशगतमपि ऋगादिपदं स्वविषये व्यवस्थाप्यते । न तु विधिप्राधान्यात् वैपरीत्यं वक्तुं शक्यम् । यत्र विरोधस्तत्रैव लक्षणाया औचित्यात्। गुणे त्वन्याय्यकल्पनेत्यस्यानुपसंजातविरोधिन्यर्थवादेप्यप्रवृत्तेः। तस्मादृक्पदेन ऋग्वेद एव ग्राह्यो न ऋङ्मात्रम्। तेन ऋग्वेदान्तर्गतानां यजुषामप्युच्चैस्त्वं यजुर्वेदगतानामृचामप्युपांशुत्वं फलम् । अत्रोपक्रमोपसंहारैकवाक्यतया वेदधर्मोऽयमवधारित इति वाक्यवशेनायं विनियोगः । दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यतो दर्शपूर्णमासाभ्यां स्वर्गं भावयेदित्यवगते केन प्रकारेण भावयेदित्याकाङ्क्षायामाह समिधो यजति व्रीहीनवहन्तीत्यादि। तेनायमर्थः समिदादिभिरारादुपकारिभिरवघातादिभिः संनिपत्योपकारिभिश्चाङ्गैः संपन्नौ तौ यथा फलं साधयितुं क्षमौ भवतस्तथा यजेतेति गम्यते। ततश्च उपकारार्थिनि यागे उपकर्तुं समर्थानां प्रयोजनाकाङ्क्षाणामङ्गानाञ्चान्योन्याकाङ्क्षालक्षणेन प्रकरणेन शेषभावः। दर्शपूर्णमासादौ येन क्रमेण कर्मणामाम्नानम् तेनैव मन्त्राणामप्यस्तीति उपांशुयाजस्थाने पठितो दब्धिर्नामासीतिमन्त्रः श्रुत्याद्यभावेपि स्थानप्रमाणादेवोपांशुयाजाङ्गत्वं भजते। दर्शपूर्णमासादिष्वाध्वर्यवहौत्रौद्गात्रादिस-

४

माख्यया ख्याताः पदार्थाः कर्त्रपेक्षाः सन्ति । तेषां येन केनचिद्यत् किंचित्कर्म कर्त्तव्यमित्यनियमे प्राप्ते समाख्यया प्रमाणेन क्रियाकर्तृसम्बन्धः सिध्यति ॥ ॥

अथैतेषां बलाबलं चिन्त्यते तत्र सूत्रम् श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति । एतेषु श्रुत्यादिषु परंपरं दुर्बलम् कुतः अर्थविप्रकर्षात् । श्रुतिर्हि निरपेक्षशब्दरूपा स्वयमेव विनियोक्त्री भवति, लिङ्गं तु श्रुतिं कल्पयित्वा विनियोजकम् न स्वातन्त्र्येण । एवं वाक्यं लिङ्गश्रुती प्रकल्प्य विनियोजकम् । एवं प्रकरणं त्रयस्य कल्पनया, स्थानं चतुष्टयस्य समाख्या पञ्चकस्येति विप्रकर्षो ज्ञेयः । तत्र श्रुतिलिङ्गयोर्विरोधे श्रुतेर्बलीयस्त्वमुक्तम् । ऐन्द्रया गार्हपत्यमित्यत्र लिङ्गवाक्ययोर्विरोधेपि स्योनं त इत्यत्र वाक्यात्कृत्स्नस्यैकमन्त्रत्वे प्राप्ते लिङ्गात् सदनकरणस्थापनरूपार्थद्वयप्रकाशकान्मन्त्रभेद इत्युक्तम् । वाक्यप्रकरणयोर्विरोधोदाहरणं सूक्तवाके । स च लिङ्गवशात्पर्वद्वये विभज्य विनियोज्य इत्युक्तम् । तत्र इदं हविरजुषेतामित्यादीनि पदानि प्रकरणाविशेषेप्यन्यत्र न प्रयुज्यन्ते । अपि तु वाक्यस्य बलवत्त्वादग्नीषोमावित्यनेनैव सम्बध्यन्ते । तत्रश्चैकवाक्यत्वादग्नीषोमलिङ्गप्रकाशनसामर्थ्यं ततः श्रुतिस्ततो विनियोग इति सन्निकर्षः । इन्द्राग्नीपदेन तु प्रकरणद्वारैकवाक्यत्वमिति विप्रकर्षः । तस्माद्वाक्यं प्रकरणाद्बलवत् । स्थानप्रकरणयोर्विरोधस्तु इष्टिपशुसोमयोगात्मके राजसूयेऽभिषेचनीयाख्यः सोमयागोस्ति तत्सन्निधौ पठिता हि देवनादयः । यावत् प्राकृताङ्गैःकथंभावे निराकाङ्क्षेभिषेचनीये ऽथ यथाकथंचित्सन्निधानादाकाङ्क्षां प्रकल्प्याङ्गत्वं कल्प्यते, ततः प्रागेव प्रकरणाद्राजसूयाङ्गत्वमेषां गम्यते । अतः सन्निधेः प्रकरणं बलवत् । क्रमसमाख्ययोर्विरोधस्तु पौरोडाशिकसमाख्यकाण्डे सान्नाय्यपात्रशुन्धन-

क्रमे शुन्धध्वमितिमन्त्रो यावत् समाख्यया सम्बन्धं प्रकल्प्य पुरोडाशाङ्गतां नीयते, तावत्सन्निधिः क्लृप्तसम्बन्धद्वारा आकाङ्क्षाक्रमेणैकवाक्यत्वं ततः सामर्थ्यं ततः श्रुतिं च प्रकल्प्य तस्य सान्नाय्याङ्गत्वं विधत्त इति समाख्यातः सन्निधिर्बलवान् । अत्र श्रुत्यादिभिर्लिङ्गादीनां बाधः कल्पनामूलोच्छेदाल्लैङ्गिकादिकल्प्यपदार्थस्य अप्राप्तत्वादेव । प्राकृताः कुशादयस्तु प्राप्ता एव सन्तो वैकृतैः शरैर्बाध्यन्ते । एवमाहवनीये जुहोतीति सामान्यशास्त्रेण प्राप्त एवाहवनीयः पदे जुहोतीत्यनेन विशेषेण बाधात् इति तार्तीयीकादप्राप्तबाधाद्दाशमिकः प्राप्तबाधो विलक्षण इति ज्ञेयम् । ज्योतिष्टोमे तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येत्यत्राहीनपदं न हीन इति योगाज्ज्योतिष्टोमं वक्ति तत्रैव द्वादशोपसत्त्वमपि विधीयत इति, न,अन्हां समूहो ऽहीन इति द्विरात्रादावहीनशब्दस्य रूढत्वात् । अह्नः खः क्रताविसहःशब्दात्समूहेऽर्थे खप्रत्ययस्तस्याऽऽयादिसूत्रेण ईनादेशे आद्युदात्तश्चेतिप्रत्ययस्वरेण ईकारस्योदात्तत्वे मध्योदात्तं पदं चात्र पठ्यते । नञ्समासे त्वव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं स्यान्नच तथा पठन्ति । तस्मादहर्गणाङ्गत्वाद्द्वादशोपसत्त्वम् । त्र्युपसत्त्वं स्तुत्यर्थम् अत्र कीर्त्यमानमित उत्कृष्यते । तत्रैव युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यादित्यत्र द्वित्वं न स्त्रीपुंसनिमित्तम् । अग्नीषोमयोर्देवतात्ववत्तयोर्यजमानत्वस्यव्यासक्तत्वात् । सोमेन यजेत वसन्तेवसन्ते ज्योतिषा यजेतेत्युत्पत्तिप्रयोगचोदनयोराख्यातोपात्तं गुणभूतोपादेयकर्तृगतमेकत्वं विवक्षितमेव अतो द्वियजमानत्वं कुलायाऽहीनादिषु उत्कृष्यत एव । दर्शपूर्णमासयोः पश्वभावेपि जाघन्या पत्नीः संयाजयतीत्यत्रोत्कृष्यते । तृतीयाश्रुत्या यागाङ्गत्वेन तद्विधीयमानत्वाल्लौकिक्यापि जाघन्या पत्नीसंयाजानां द्रव्याकाङ्क्षानिवृत्त्यापत्तेः । दर्शपूर्णमासयोः पूषा प्रपिष्ट-

भाग इति श्रुतं तत्र प्रकरणे पूषाभावाद्यत्र चातुर्मास्यादौ पौष्णगवश्चरुस्तत्र उत्कृष्यते। पुरोडाशे प्राप्तत्वात्पशौ च हृदयादिस्वरूपनाशापत्तेः पेषणस्याविधेयत्वात्पिष्टचरावपि पाकवैशद्येन चरुशब्दप्रयोगोपपत्तेश्च। एवं च पौष्णे पेषणं देवतान्तरविशिष्टे तु पूष्णि न पेषणं। विशिष्टस्यातिरिक्तत्वात्तत्र केवलधर्मस्याप्रवृत्तेः ॥ ३ ॥

( इति तृतीयाध्याये तृतीयः पादः ॥ )

दर्शपूर्णमासयोर्निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययत इति श्रुतम्। तत्र सदोपवीतिना भाव्यमिति स्मृतेर्नित्यमुपवीतस्य प्राप्तिरस्तीति निवीतमित्यर्थवादः। उपवीतं च स्मृत्या पुरुषार्थत्वेन प्राप्तमपि क्रत्वर्थं पुनर्विधीयते। सम्भवति हि पुमर्थोल्लङ्घनेपि क्रत्ववैगुण्यं मन्यमानस्य तदप्राप्तिरिति। एवं तत्रैव नानृतं वदेदित्यस्यापि पुनर्विधिर्ज्ञेयः। म्नताग्निहोत्रे अधस्तात्समिधं धारयन्नुपद्रवत्युपरि हि देवेभ्यो धारयतीति विज्ञायत इत्यत्र परप्रकरणेऽप्राप्तत्वादुपरिधारणमपि विधीयते दर्शपूर्णमासयोः। तस्माज्जञ्भ्यमानो नुब्रूयान्मयि दक्षक्रतू इति मन्त्रवाक्यप्रकरणयोरविरोधात् क्रतावपि जृम्भायाः सम्भवात् न प्रकृतं क्रतुमुल्लङ्घ्य वाक्येन पुरुषार्थोपि स्यादिति। तत्रैव तस्माद् ब्राह्मणाय नावगुरेतेत्यवगोरणनिषेधस्तु यो ब्राह्मणायावगुरेत तं शतेन यातयादित्यनेन यातनाख्यपृथक्फलश्रवणात् क्रतुमुल्लङ्घ्यापि पुरुषार्थे पर्यवतिष्ठते। एवं मलवद्वाससा न संवदेतेत्यपि पुमर्थमेव तामपरुध्य यजेतेतिवचनेन क्रतुमध्ये ऽपरुद्धया तया सह संवादाप्रसक्तेः। तस्मात्सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवतीत्यत्र पुरुषार्था स्वर्णधृतिः पूर्वोक्ता चारुणेष्टिर्वैदिके एव अश्वदाने न तु लौकिके। दर्शपूर्णमासयोराग्नेयो ऽष्टाकपालो भवति तथा उपस्तृणाति अभिघारय-

ति द्विर्हविषोऽवद्यति चतुरवत्तं जुहोतीत्यत्र कृत्स्नस्य पुरोडाशस्य यागीयद्रव्यत्वेऽपि प्रक्षेपोऽवदानमात्रस्यैव कर्त्तव्य इति भाष्ये। अवदानमेव यागीयं द्रव्यमिति वार्त्तिके। एवं च अवत्तनाशे पुनरायतनादवदानं श्रूयमाणमुपपद्यते ऽन्यथा तदनर्थकं स्यात् पुनः कृत्स्नस्योत्पत्तिश्च स्यात्। हुतेषु अवदानेषु शेषाणां प्रतिपत्त्यपेक्षत्वात् सर्वेभ्यो हविर्भ्यः स्विष्टकृदादीनि स्युः शेषकार्याणि। आग्नेयं चतुर्धा कृत्वा इदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीध इति निर्देशे न ऋत्विजामानत्यर्थः परिक्रयो न कर्तुं शक्यते सकलस्य हविषो देवतायै प्रत्तत्वात्तत्र यजमानस्य स्वाम्याभावेन ततः परिक्रयायोगात्। शेषस्य तु प्रतिपत्त्यपेक्षत्वाद्भक्षणार्थ एवायं निर्देशः॥ ४॥

( इति तृतीयाध्याये चतुर्थः पादः॥ )

उपांशुयाजद्रव्याद्ध्रौवाज्यादपि स्विष्टकृदादीनि प्रतिपत्तिकर्माणि कर्त्तव्यानीत्येतद्भाव्युपस्तरणाद्युपयोगिनोऽकृतार्थस्य ध्रौवस्य प्रतिपत्त्यनपेक्षत्वात् सर्वान्ते च तच्छेषेण समिष्टयजुर्होमः क्रियत इति न ततः शेषकार्याणां प्राप्तिः प्रकृतिहोमार्थं जुह्वभिक्रमणमस्ति साकंप्रस्थायीये तु सह कुम्भीभिरभिक्रामतीति जुहूमपहाय कुम्भीरेव होमकार्ये निवेशयेदित्यवगम्यते। ततश्च तत्रापि शेषाभावान्न शेषकार्यप्राप्तिः। अत्र सोमभक्षो बहुप्रकारो विचारितः। यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममित्यत्र यद्यपि स्तिभिनीचमसस्य उपक्रमोपसंहारयोर्भक्षमात्रे सम्बन्धोऽस्ति तथापि सोमभक्षस्थाने निवेश्यमानो ऽयं तद्वदेव यागीयद्रव्यसंस्काररूपो भविष्यतीति भक्षसम्बन्धकथनव्याजेन तद्द्वारावगतयागसाधनत्वेनायं फलचमसो विधीयते तद्विधौ च भक्षः प्राप्त एवानूद्यते। एवं सोमाभावे पूतीकानभि-

षुणुयादित्यभिषवयुक्तपूतीकानामपि यागसाधनत्वं ज्ञेयम् ॥ ९ ॥

( इति तृतीयाध्याये पञ्चमः पादः ॥ )

यस्य पर्णमयी जुहूर्भवति इत्यनारभ्याधीतं पर्णतादिकं प्रकृतिद्वारैव विकृतिं प्रतिपद्यते जुह्वादिवत् । न तु विकृतावपि तद्विधानं न्याय्यम् । अतिदेशेन जुहूद्वारैतत्प्राप्तौ सत्यां पुनर्विधानायोगात् । सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्याधीतं साप्तदश्यं पाञ्चदश्यावरुद्धायां प्रकृतौ निवेशमलभमानं विकृतिमेवाश्रयते तत्रापि श्रुतं साप्तदश्यं मित्रविन्दादिकामेवेति वक्ष्यते । सामान्यतः प्रथमं प्राप्तं ब्राह्मणादिषु सावकाशं च नित्यं पाञ्चदश्यं साप्तदश्यं वैश्यस्येति वैश्ये निमित्ते नैमित्तिके विशेषेण साप्तदश्येन पश्चात्यतया पूर्वबाधं विना जात्वात्मानमलभमानेन वैश्यमात्रविषयतया निरवकाशेन बाध्यते । एतैरेव हेतुभिः काम्यमेकविंशतिं प्रजाकाम इत्येकविंशत्याद्यनुवचनं नित्यस्य पाञ्चदश्यस्य बाधकं न त्वऽपुरुषार्थत्वान्नैमित्तिकस्यापि साप्तदश्यस्य । एतेन चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्येति गोदोहनेन चमसबाधो व्याख्यातः । आधानं पवमानेष्टयश्च मिथः सन्निहिताः समाम्नाताः । तत्र फलवदग्निहोत्राद्यर्थत्वादग्नयः फलवन्तस्तदर्थमाधानम् इष्टयस्तु अग्न्यङ्गमाधानाङ्गं वेत्यन्यदेतत् । ननु जुहूद्वारा पर्णतेवाग्निद्वारा आधानमपि प्रकृत्यर्थमेवेति चेन्न दृष्टान्तवैषम्यात् । लोकप्रसिद्धजुहूस्वरूपस्यान्यतोपि सम्भवेन पर्णतायास्तत्स्वरूपे आनर्थक्यादगत्या प्रकृत्यङ्गत्वम् । आहवनीयादेस्त्वदृष्टरूपत्वेनाधानस्य तत्स्वरूप एवार्थवत्त्वात्तदर्थमेवाधानमित्यर्थः । नैमित्तिकं क्रत्वर्थंस्त्रिभिन्यादिवन्नित्येन सोमेन समानविधानं भवत्यनित्यत्वात् । तेन तत्र सोम इव क्रयादेरप्राप्तिः । प्रतिनिधौ तु शिष्टव्रीह्यादिद्रव्यसादृश्यादुपादीयमाने नीवारादौ मुख्येन समानविधानं भवत्येव । मुख्यद्रव्यावयवानां बहूनां

दर्शनात् । एवं विसदृशेऽपि सोमाभावे पूतीकानाभिषुणुया-
दिति वाचनिके प्रतिनिधावपि वचनबलादेव सादृश्यं मुख्येन
सह समानविधानत्वं च ज्ञेयम् ॥ ६ ॥

( इति तृतीयाध्याये षष्ठः पादः ॥ )

वेदिं खनतीत्यादीनां वेद्यादिधर्माणां वेद्यां हवींष्यासाद-
यतीत्यङ्गप्रधानसाधारणहविःशब्दात्साधारण्यं प्रधानहविर्मात्रार्थ-
त्वेन हविःशब्दस्य संकोचे नियामकाभावात्। केशश्मश्रुवापाद-
यस्तु नाङ्गप्रधानार्थाः । क्रियाङ्गभूतकर्त्रंशानन्तःपातित्वात् अ-
संस्कृतस्यापि कर्तृत्वसंभवाच्च। भोक्तृत्वं तु क्रियां प्रति प्रधानभूत-
मदृष्टं च। अतस्तद्गुणभूताःसंस्काराः प्रधानार्था न तु गुणार्थाः।
गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यादितिन्यायेन तेषां
गुणानां विशेषेणापि यागाङ्गित्वायोगात् । यजेत स्वर्गकाम
इत्यात्मनेपदात्कर्तृगामित्वं क्रियाफलस्य गम्यते । कर्तृत्वं
च हविस्त्यागदक्षिणादानादेरन्यत्र प्रयोजकत्वेनापि यजमानस्य
संभवति नित्यवदाम्नातपरिक्रयसामर्थ्यादेकेन कृत्स्ने तत्रानुष्ठाना-
योगादन्यैरपि कारयितव्यम् । ते च इष्टौ नामभेदाद्वरणभेदाच्च
चत्वारः ब्रह्मा होताध्वर्युरग्नीदिति । चातुर्मास्येषु प्रतिप्रस्थाता
पञ्चमः।पशौ मैत्रावरुणः षष्ठः । सोमे मुख्याश्चत्वारो ब्रह्मा होता-
ध्वर्युरुद्गातेति । ब्राह्मणाच्छंस्याग्नीध्रः पोता चेति ब्रह्मणो द्वि-
तीयतृतीयचतुर्थाः । होतुस्तु मैत्रावरुणो ऽच्छावाको ग्रावस्तुच्च ।
अध्वर्योः प्रतिप्रस्थाता नेष्टोन्नेता च । उद्गातुः प्रस्तोता प्रतिहर्ता
सुब्रह्मण्या च । सदस्यः सप्तदशो वैकल्पिकः तदभावे यजमानः
सप्तदशः पत्नी अष्टादशी। दश चमसाध्वर्यवः शमिता सोमवि-
क्रयी चेति द्वादश तेभ्योन्ये। उदगातारस्त्वृत्विक्ष्वेवान्तर्भूताः। तेषां
च कार्यव्यवस्था आध्वर्यवं हौत्रमौद्गात्रमितिकाण्डसमाख्या-
वशादेव। आहवनीये जुहोतीत्यादिवचनप्रापिता आहवनीयादयः

प्रकृतिविकृत्यात्मकसर्वक्रत्वर्थाः अनारभ्याम्नातत्वेनाप्रकरणाधीनत्वात् ॥ ७ ॥

( इति तृतीयाध्याये सप्तमः पादः ॥ )

यो दक्षिणाद्वादशशतदानादिसंस्कारः श्मश्रुवापादि तपो श्वहं नाश्नीयादित्यादि एतानि समाख्यात आध्वर्यवाण्यपि यजमानस्यैव अध्वर्य्वादिपरिक्रेतृत्वात् क्रतुयोग्यतापेक्षत्वात् फलभागित्वाच्च । यत्र तु य एतामिष्टकामुपदध्यात्स त्रीन्वरान् दद्यात् हिरण्यमालिनः प्रचरन्ति ऋत्विजः प्रचरन्तीत्यादिवचनम् । तत्रर्त्विजामेव हिरण्यमालित्वादिसंस्काराणां यावत्संस्कार्यमावर्यत्वात्सर्वर्त्विग्विषयता । यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयादिति सदोमानादिषु गुणैरध्वर्युकाण्डस्थैरपि यष्टुरेव फलम्। वचनात्तु आत्मने च यजमानाय च यं कामं कामयते तमागमयतीत्यादौ वचनादृत्विजोपि । आयुर्दा अग्नेऽस्या ऽऽयुर्मे देहीति प्रत्यगाशिषो मन्त्रानाध्वर्यवस्थानपि यजमान एव प्रयुञ्जीत तत्फलस्य यजमानगामित्वात् लिङ्गेन समाख्याबाधाच्च। वाजस्य मेत्यादयस्तु काण्डद्वयपाठादध्वर्युणा यजमानेन च प्रयोज्याः। वाजपेये क्लृप्तीर्यजमानं वाचयतीति वचनाद्विदुषोपि यजमानस्य वाचनम् । वत्सं चोपाऽवसृजत्युखां चाधिश्रयतीत्यनुकीर्त्य एतानि वै द्वादश ह्यङ्गानि दर्शपूर्णमासयोस्तानि य एवं संपाद्य यजत इति द्वन्द्वसंपादनम् आत्मनेपदावगमितस्य यष्टुः कार्यम् संपाद्य यजत इति क्त्वाश्रुत्या संपादनयजनयोः समानकर्तृकत्वावगतेरिति पूर्वः पक्षः। प्रयोजकत्वेनापि द्वन्द्वानां यजमानकर्तृकत्वसंभवात् अध्वर्युकाण्डपाठाच्चाध्वर्युरेव तेषां कर्त्तेति राद्धान्तः[1] । अग्नीषोमीयपशूपकृतौ यूपस्य परिव्याणे परिवी-

( १ ) 'अत्र समाख्यया श्रुतिबाध' इति खपुस्तके अत्राधिकः पाठः ।

रसीत्यध्वर्योर्मन्त्रः। युवा सुवासा इति होतुः। कुण्डपायिनामयनादौ ऋत्विक्समासे यो होता सोऽध्वर्युरित्यध्वर्युकार्ये विहितस्य होतुः प्रावनिको ऽध्वर्युमन्त्रः चोदकप्राप्तहोतृमन्त्रं बाधते। प्रैषाणां तदर्थानां च कर्तारोऽन्ये। प्रोक्षणीरासादयेत्यादिमध्यमपुरुषप्रयोगाल्लिङ्गात्। तत्रापि प्रैषकर्ताऽध्वर्युस्तदर्थकर्ताग्नीदादिः। ममाग्ने वर्चो विहवेष्वस्त्वित्यध्वर्युमन्त्राङ्गं फलम् मम यजमानस्येत्यध्याहारेण यजमानगतमेव। मा मा सन्ताप्तमित्यादिकमृत्विग्गतमेव। तन्नौ सहेत्याद्युभयगतम् । एवमन्यदप्यूह्यम् ॥ ८ ॥ (इत्यष्टमः पादः ॥)

इति भाट्टभाषाप्रकाशे तृतीयोऽध्यायः ॥ ३ ॥

अथ यत्रानेकः शेषी तत्र कः शेषं प्रयुङ्क्ते को नेति चिन्ता । तत्फलं च पुरोडाशकपालेन तुषानुपवपतीत्यादौ कपालस्य तुषोपवापाङ्गत्वेपि यत्र सौर्ये चरौ तुषोपवापे सत्यपि कपालं नासादनीयम् कपालेषु पुरोडाशं श्रपयतीति तत्प्रयोजकस्य पुरोडाशस्याभावात्, तादृशस्थले हस्तेनैव तुषोपवाप इति। तत्र यद् क्रतोः साधनम् तत् क्रतुप्रयोज्यं क्रत्वर्थम्। यत्पुरुषं प्रीणयति रागसिद्धप्रवृत्तेः फलादन्यद् द्रव्यादिकम् तत्पुरुषप्रयोज्यं पुमर्थम्। यथा चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्येत्यत्र प्रणयनमाश्रित्य पुरुषार्थं साधयद्गोदोहनम् अर्थात्क्रतुमप्युपकरोति। एवं द्रव्यार्जनमपि । तस्य क्रत्वर्थत्वे ऽन्यायेना[१]प्यर्जितेनारम्भसिद्धेरप वा एष सुवर्गाल्लोकाच्च्यवत इति क्रत्वनुपक्रमे दोषदर्शनं न सङ्गच्छते। तस्मात्तदपि पुमर्थमेव सत् क्रतावप्युपकरोति ॥ नेक्षेतोद्यन्तमादित्यमित्यत्र नञः क्रियान्वये यत्र क्रत्वर्थमुद्यदादित्यावेक्षणं प्राप्तम् तस्य प्रतिषेधो भवति। ततश्च ग्रहणाग्रहणवत्तद्विकल्पे नञर्थश्च श्रौतो लभ्यते । तथापि तस्य व्रतमित्युपक्रमाननन-

(१) क्रत्वर्थत्वे ऽल्पेनेत्युभयपुस्तकपाठः ।

गुणत्वान्निषेधपक्षमपहाय उपपदार्थेन नञोन्वयात् पर्युदासपक्षमाश्रित्य अनीक्षणसंकल्पो लक्ष्यते। तेन विकल्पदोषो नानुषज्यते। एतावता हैनसा युक्तो भवतीति वाक्यशेषरूपं फलवचनमर्थवद्भवति॥ पशुना यजेतेत्यत्र पशुरुपादेयः। तत्र कारकाणां क्रिययैवान्वय इति नियमात्कारकेण समानप्रत्ययश्रुत्याऽऽत्मसात्कृता संख्या तद्द्वारा क्रियामेवोपसर्पति न समानपदोपात्तमपि कारकापेक्षया व्यवहितं पशुं स्पृशति। तेन सर्वत्रोपादेयगतं विशेषणं विवक्षितमेव॥ एवं लिङ्गमप्युपादेयगतं विवक्षितमेव सिंहः सिंहीत्यादौ ततोप्यर्थविशेषप्रतिपत्तेः॥ स्विष्टकृदादीनि स्मरणांशेन प्रतिपत्त्यंशेन च यागीयद्रव्यदेवतं संस्कुर्वन्ति यागांशेनादृष्टमपि कुर्वन्तीति ज्ञेयम्। यथार्थतः सन्निधानादुपादेयगतमेकत्वादिकं क्रियाप्रयोज्यम् एवं तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यत्रापि सेति तत्पदेन प्रकृतस्य पयस एवामिक्षात्वावगमात्तस्यैव च द्विकर्माणमानयतिं प्रति मुख्यकर्मत्वावगमात्तदेवानयनं प्रयुङ्क्ते न तु वाजिनम् शब्दतोर्थतश्च व्यवधानात्। उत्तरार्द्धात्स्विष्टकृतमित्युत्तरार्द्धार्थं न हविरन्तरं कर्त्तव्यम् अपि तु विनियुक्तस्यैवायं विनियोगः। वाक्यात्तु प्रयाजशेषेण हवींष्यभिघारयतीति श्रुत्या गम्यमानोपि हविःसंस्कारो ऽदृष्टार्थत्वान्नाद्रियते शेषे प्रतिपत्तिरूपदृष्टप्रयोजने सम्भवति तदयोगात्। अतः प्रधानशेषहविरधिकरणेन क्षारणेन संस्कुर्यादिति तदर्थः। अधिकरणनियमात्तत्संस्कारोपि इत्युभयार्थत्वमपि। फलं तु वाजपेयक्रतुपशूनां प्राजापत्येन च सहोपक्रमेपि प्रातःसवने क्रतुपशूनामालम्भो मध्यन्दिने इतरेषाम् तत्र प्राजापत्यपयोभिघारणार्थं शेषः स्थाप्य इति पूर्वपक्षे न स्थाप्य इति सिद्धान्ते॥ १॥

( इति चतुर्थाध्याये प्रथमः पादः॥ )

यूपस्य स्वरुं करोतीत्यादौ यूपस्य विधिना स्वरुक-रणं न विधेयं लक्षणागौरवात् । स्वरुणा पशुमनक्तीति अञ्ज-नार्थत्वेन प्राप्तः स्वरुः कुत उपादेय इत्याकाङ्क्षायां यूपस्येति षष्ठ्या तस्य यूपापादनकत्वं गम्यते । तथाचात्मार्थं विधानं भवति । एवं मूलतः शाखां परिवास्योपवेष्टं करोतीत्यत्र परिवासनस्य शाखैव प्रयोजिका द्वितीयाश्रवणात् न तु मूलम् तदनुनिष्पन्नत्वा-द् । तेन शाखाया अभावे यतःकुतश्चित्काष्ठादुपवेषः कर्त्तव्यः । य-जतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्,तदुक्ते श्रवणा-ज्जुहोतिरासेचनाधिकः स्यात् ( २७, २८ सूत्रे ) । यदाग्नेयो-ष्टाकपाल इत्याद्युत्पत्तिवाक्येषु यजेरश्रवणेपि यत्र द्रव्यदेवतं दृश्यते तत्र यजिरस्तीत्यवगन्तव्यम् । होमस्तु यज्युक्त एवार्थे । चतुरवत्तं जुहोतीतिवाक्यात् आसेचनमधिकं विधीयते ॥ २ ॥

( इति चतुर्थाध्याये द्वितीयः पादः ॥ )

एकस्य तूभयार्थत्वे संयोगपृथक्त्वम् अग्निहोत्रे दध्नेन्द्रियका-मस्य जुहुयात् दध्ना जुहोतीति वाक्यद्वयं पृथग्विपरिदृष्टिलब्ध-होमाश्रयं मिथोनिराकाङ्क्षतया न सम्बध्यते यद्दध्ना जुहुया-त्तदिन्द्रियकामस्येति । तेन नित्यार्थं कामार्थं चेत्युभयार्थं दधि संयोगपृथक्त्वात् ॥ स्वर्ग आमुष्मिक एव ॥ कारीर्या वृष्टिका-मो यजेतेति कारीरी शुष्यत्सस्यसंजीवनकामस्य विहितैवैहि-कफलैव ॥ चित्रया यजेत पशुकाम इति चित्रादिफलं त्वसति प्रतिबन्धके ऐहिक,मन्यथाऽऽमुष्मिकम् ॥ वाजपेयेनेष्ट्वा बृहस्प-तिसवेन यजेतेत्यत्र वाजपेयप्रकरणात् तदङ्गत्वेन बृहस्पतिसवाख्यं कर्मान्तरं विधीयते । पौरोहित्यकामस्य यो बृहस्पतिसवस्तस्यात्रा-नुपस्थितेस्तत्सदृशत्वलाभार्थं तन्नामकत्वमत्र ज्ञेयम् कुण्डपायिना-मयनस्था(मासा)ग्निहोत्रवत् ॥ ज्योतिष्टोमप्रकरणे तु दर्शपूर्णमासा-भ्यामिष्ट्वा सोमेन यजेतेति तु कालार्थः संयोगो न त्वङ्गाङ्गिभा-

वार्थः ज्योतिष्टोमप्रकरणात् ॥ वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इत्युपक्रम्य यस्मिन् जात एतामिष्टिं निर्वपति पूत एव स इत्यादिफलं जातगतं ज्ञेयम् वचनात् । न च शास्त्रफलं प्रयोक्तरीतिन्यायविरोधः गुणवत्पुत्रताया अपि पितुः प्रीतिकरत्वेन तदनुग्रहस्यापि लाभात् ॥३॥

( इति चतुर्थाध्याये तृतीयः पादः ॥ )

पितृयज्ञः स्वकालविधानादनङ्गं स्यात् अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्यत्रामावास्यापदेन कर्मोपादाय तदङ्गत्वं पितृयज्ञस्य । ततश्च फलकल्पनापि नास्तीति प्राप्य काले शब्दस्य मुख्यत्वात् अपराह्ण इति कालसामानाधिकरण्याच्च पितृयज्ञः स्वकालविहितो नेष्ट्यङ्गम् ॥ ४ ॥

( इति चतुर्थः पादः ॥ )

इति भाट्टभाषाप्रकाशे चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

एवं सिद्धानां प्रयोज्यानां क्रमो विचार्यते । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यत्र न पूतः पावयेदितिवचनादऽदीक्षित एवाध्वर्युरन्यान् दीक्षयति सत्रे । तत्र हि ये यजमानास्त एव ऋत्विज इति सर्वेषां दीक्षाया आवश्यकत्वात् । अध्वर्य्वादिसंज्ञाश्च तत्कार्यपरिग्रहात् । तं च ब्रह्मचारी वाचार्यप्रेषित इत्यन्तमयं श्रौतः क्रमः क्त्वाश्रुत्यवगतः । अग्निहोत्रं जुहोति यवागूं पचतीत्यादावार्थक्रमः । पाकस्य होमार्थत्वे दृष्टार्थतालाभादत्र पाठक्रमो नाद्रियते, होमोत्तरं यवागूपाकस्यादृष्टार्थापत्तेः ॥ समिधो यजति तनूनपातं यजतीत्यादौ पाठक्रम एव । सप्तदश प्राजापत्यान्पशूनालभत इत्यत्र पशूनामुपाकरणप्रोक्षणसंज्ञपनादिषु प्रथमः पदार्थो येन क्रमेण प्रवृत्तस्तेनैव क्रमेण द्वितीयादयः पदार्थाः कर्त्तव्याः । सोयं प्रवृत्तिक्रमः प्रधानस्याङ्गैः सह न्यूनमधिकं वा विप्र-

कर्षमसहमानस्यानुरोधादाश्रीयते। साद्यस्क्रे सवनीयस्थाने सह पशुना ऽऽलभत इत्युक्तम्। तत्र स्थानिनः स्वस्थानात्प्रच्युतौ कारणाभावात् प्राथम्यम्। अग्नीषोमीयानुबन्ध्ययोस्तु ततः परं प्राप्तयोः प्रकृतौ दृष्टं पौर्वापर्यमसति बाधके नोल्लङ्घनीयमिति द्वितीयोऽग्नीषोमीयस्तृतीय आनुबन्ध्य इति तेनैव क्रमेण तेषां प्रोक्षणादयः॥ सारस्वतौ भवत इति सरस्वतीदेवतः सरस्वद्देवत इति च यागद्वयं श्रुतम्। तत्र याज्यानुवाक्यायुगलक्रमो मुख्यः। तेन स्त्रीदेवतस्य पूर्वं निर्वापः पश्चात्पुंदेवतस्येति प्रवृत्तिक्रमेणैव तत्सिद्धमित्युदाहरणान्तरं मृग्यम्। तत्र दर्शपूर्णमासयोः प्रथमं दधिधर्माः शाखाहरणादयः समाम्नाताः पश्चादाग्नेयधर्मा निर्वापादयः याज्यानुवाक्यायुगलक्रमस्तु विपर्ययेण। अतस्तत्र प्रवृत्तिद्वयसत्त्वेऽपि मुख्यक्रमेणैव नियमः। तेन प्रथमं प्रयाजशेषेणाग्नेयस्याभिघारणं पश्चाद्दध्न इत्यादि फलम्। दर्शपूर्णमासयोरेव प्रथममग्नीषोमीयस्य ब्राह्मणं पश्चादाग्नेयस्य। याज्यानुवाक्याक्रमस्तु विपरीतोऽस्ति। तत्रापि स्मृत्येकप्रयोजना मन्त्रा इति पाठक्रम एव बलवान्॥ एवमप्यङ्गानां पाठक्रमो बलीयाननपेक्षत्वात्। तेनाग्नेयाग्नीषोमीययोरन्तराले मुख्यक्रमानुरोधात्मा सोपि उपांशुयाजार्थाज्यनिर्वापो यथापाठमेव भवति। अत एव प्राकृतात् क्रमान्निराकाङ्क्षायामाग्नावैष्णवमेकादशकपालं निर्वपेत्सरस्वत्याज्यभागा बार्हस्पत्यश्चरुरित्यादिविकृतौ न कर्मान्तरकल्पना। अग्नीषोमीये पशौ प्रकृतितः हविरासादनान्ते प्राप्ताः प्रयाजास्तिष्ठन्तं पशुं प्रयजन्तीत्यपकृष्यमाणा आघारानप्यपकर्षन्ति ततः पूर्वं तेषामनुष्ठाने क्लृप्तक्रमलोपाद्वैगुण्यं स्यादिति तदन्तापकर्षः। एवमाग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीत्यत्रापि तदाद्युत्कर्षः। तत्रापि तदनन्तरं कर्त्तव्यस्य सूक्तवाकस्य ततः प्राक्करणे क्लृप्तक्रमभङ्गात्। अमावस्यायां वेदं कृत्वा वेदिं करोतीत्यपकृष्यमाणा वेदिः स्व-

स्मात् पूर्वान्हविरभिवासनान्तान् नापकर्षेत्। निर्वापादीनां परेद्युश्चोदितत्वात् तेन तत्र तन्मात्रापकर्षः। मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुमित्याम्नाता सांतपनीया दैवान्मानुषाद्वा [प्रतिबन्धात्] यावत्सायमुत्कृष्टा चेत् सायमस्तमिते जुहोतीति कालस्यानुपादेयत्वेन यावज्जीवमग्निहोत्रं जुहुयादिति जीवनरूपनिमित्तविशेषणत्वात्तत्र प्राप्तमग्निहोत्रं किंचिदङ्गमपहायापि कृत्वैव सान्तपनीया कर्त्तव्या ॥ १ ॥

( इति पञ्चमाध्यायस्य प्रथमः पादः ॥ )

वाजपेये प्राजापत्यानां पशूनामेकस्योपकरणादि प्रदानान्तं कृत्वा परस्य तथैव कर्त्तव्यमिति काल्पनिकः काण्डानुसमयः वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीत्येककालप्रयोगेण बाध्यते। तमनु उपाकरणादयोपि तेषामेककाला एव प्राप्ताः सन्तो ऽशक्यत्वात् क्रमेण क्रियन्त इति पदार्थानुसमय एवात्र बोध्यः। यत्राश्वप्रतिग्रहेष्ट्यां शतं सहस्रं वा पुरोडाशास्तत्र पदार्थानुसमये सर्वेषामधिश्रयणान्ते प्रथमस्योद्वासनं चेत् क्रियते तस्य दाह एव स्यादिति प्रधानबाधात्तादृशस्थले ऽपि काण्डानुसमय एव ॥ मुष्टिकपालावदानेष्वपि काण्डानुसमय एव यथा एकस्य चतुरो मुष्टीन्निरुप्य परस्य निर्वपेत् ॥ नक्षत्रेष्ट्यादावग्नये स्वाहा कृत्तिकाभ्यः स्वाहेत्यादय उपहोमाः प्राकृता अरिष्टान् कृत्वैव कर्त्तव्या नतु ततः पूर्वम् प्रधानानन्तरम् प्रधानविधिवाक्यशेषेण प्रकृतिवद्विकृतिः कर्त्तव्येतिशब्देन प्रापितात्प्राकृतात् पश्चादेव वैकृतस्य प्राप्तेः॥ २ ॥

( इति पञ्चमाध्यायस्य द्वितीयः पादः ॥ )

प्रकृतौ पञ्च प्रयाजास्त्रयोनुयाजाः पशौ त्वेकादश प्रयाजा एकादशानुयाजाः। तत्रैकादशत्वं प्रयाजादिस्वरूपे ऽनर्थकम्, न हि पञ्च त्रयो वैकादशीभवितुमर्हन्ति। अतस्तेषां प्र-

योगे इयं संख्या सुसम्पादिनी । तिस्र उपसदः प्रकृतौ विकृतौ तु षट् । तत्र संस्थानवृद्ध्यैवावृत्तिः, दण्डकलितवदावृत्तौ तु तृतीयां कृत्वा प्रथमायां क्रियमाणायां क्लृप्तक्रमभङ्गः स्यात् ॥ एकविंशतिमनुब्रूयादिति सामधेनीवृद्धावऽन्ते तु बादरायण इति न्यायेनाऽऽगन्तूनामन्ते सन्निवेश इति प्राप्तेऽपि या धाय्याशब्दिता ऋचः पृथुपाजवत्यौ धाय्येइत्याद्यास्तासामियं वै समिध्यमानवती असौ समिद्धवती यदन्तरा तद्धाय्येत्यन्तरालत्वेन स्तुतत्वात्समिध्यमानसमिद्धवत्योरन्तराले निवेशः।अन्यासामागन्तूनामन्त एव। अत एव त्रैधातव्यामग्ने त्वीते वाजिनेत्येतस्यास्त्रिष्टुभोऽन्ते निविशेन त्रिष्टुभा परिदधातीति दर्शनमुपपद्यते । द्वादशसु रात्रिष्वनुनिर्वपेदित्याधानात् पवमानहविषां विप्रकर्षेऽपि तदन्त एवाग्निहोत्रादिप्रवृत्तिः । आधानवत्तासामग्र्यर्थत्त्वेन ततः प्रागाहवनीयाद्यसिद्धेः । तासां प्रधानाप्रङ्गत्वपक्षेऽपि साङ्गस्य प्रधानस्याननुष्ठितत्वान्न ततः पूर्वमग्निहोत्रारम्भः । काम्यानां नैमित्तिकानां वा क्रतूनां पाठक्रमादनुष्ठानं न किंतु कामनावशान्निमित्तवशाच्च तत्र क्रमः ॥३॥

( इति पञ्चमाध्यायस्य तृतीयः पादः ॥ )

आश्विनग्रहस्तृतीयस्थाने पठ्यमानोऽप्याश्विनो दशमो गृह्यत इति श्रुतेर्दशम एव गृह्यते, श्रुतितः पाठस्य दुर्बलत्वात् । एवमर्थतोऽपि पाठो दुर्बल इत्युक्तम् अग्निहोत्रं जुहोति यवागूं पचतीत्यत्र । एवं प्रवृत्तिक्रमान्मुख्यक्रमो बलवानित्यप्युक्तं प्रागेव ॥ दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवचनाद्यथेष्टिपूर्वत्वमाधानस्य एवं यदहरेवैनं श्रद्धोपनमेदथाऽऽदधीताथ यजेत सोमेन यक्ष्यमाणो नर्तून् सूर्क्ष्येन्न नक्षत्रं सोमेन यक्ष्यमाणोऽग्नीनादधीतेत्यादिवचनेभ्यः सोमेनानन्तरं यक्ष्यमाण इत्यपि गम्यते अतः सोमपूर्वत्वमपि । आग्नेयो वै ब्राह्मणो देवतया स

सोमेनेष्ट्वा ऽग्नीषोमीयो भवति यदेवादः पौर्णमास१ हविस्त-
दनुनिर्वपेत्तर्हि स उभयदेवत्यो भवतीति हविर्मात्रमुत्कृष्यते न दर्श-
पूर्णमासौ । यदेवादइति तन्मात्रस्यैवोत्कर्षाभिधानात् । तेन विप्र-
स्यापि पुरो ऽग्निष्टोमाद्दर्शपूर्णमासौ भवत एव । प्रकृतिवद्विकृतीनां
द्व्यहकालता प्राप्ता य इष्ट्या पशुना सोमेन यजेत सो ऽमावा-
स्यायां पौर्णमास्यां वा यजेतेतिप्रत्यक्षश्रुतिविहितः कालो न
चोदकात्संकोचमर्हति । तेन सर्वाङ्गयुक्ता विकृतिः पञ्चदश्या-
मेव भवति । नासोमयाजी सन्नयेदित्यऽसोमयाजिनः सा-
न्नाय्याभावात्तद्विकारा अपि सोमादूर्ध्वमेव । एवमग्नीषोमीयवि-
कारा अपीति ज्ञेयम् ॥ सोमविकारास्त्विष्ट्युत्तरमेव । नहि
तेषां सोमवदिष्टेः प्राक् चोदना ऽस्ति प्रकृत्यारम्भमन्तरेण वि-
कृतावनधिकारस्योक्तत्वात् ॥ ४ पादः ॥

इति भाट्टभाषाप्रकाशे पञ्चमो ऽध्यायः ॥

तदेवं विध्यर्थवादमन्त्रस्मृतिशिष्टाचारसामर्थ्याख्यानि षट्
प्रमाणानि धर्मे निरूपितानि प्रथमे । द्वितीये शब्दान्तराभ्याससं-
ख्यासंज्ञागुणप्रकरणान्तराणि षड् धर्मभेदे । श्रुतिलिङ्गवाक्यप्रक-
रणस्थानसमाख्याख्यानि षट् शेषशेषिभावे तृतीये । तच्छेषभू-
ता प्रयुक्तिश्चतुर्थे । श्रुत्यर्थपाठप्रवृत्तिस्थानमुख्याख्यैः षड्भिश्च
क्रमोऽपि निरूपितः । अत्रैवं निरूपितेषु कर्मस्व ऽधिकारो
निरूप्यते (प्यः) तदेवं प्रमाणभेदशेषप्रयुक्तिक्रमैर्निरूपिते धर्मे ऽधि-
कारी निरूप्यते । तत्र स्वर्गाद्यर्थ एवाधिकारी । सो ऽपि स-
र्वाङ्गसंपन्न एव न त्वन्धतिर्यगादिः । तत्रापि स्वर्गकाममुद्दिश्य
विधीयमाने याग उद्देश्ये विशेषणं लिङ्गमविवक्षितमिति स्त्रि-
या अप्यधिकारः । तत्रापि दम्पत्योः संसृष्टद्रव्यत्वाद्विभागप्र-
तिषेधाच्च सहैवाधिकारः । तत्र पत्न्या अध्ययनाभावे ऽपि

यावदुक्तं मन्त्रोच्चारणम् । पुरुषेषु तु त्रयाणामपि वर्णानां वेदसंयोगादस्यैव क्रतावधिकारः । रथकारस्य त्व ऽत्रैवर्णिकस्यापि ऋभुसौधन्वनापरपर्यायस्यावान्तरवर्णस्य ऋभूणां त्वेतिमन्त्रवर्णादस्यैवाधानम्, रूढिबाधायोगात् त्रैवर्णिकेष्वेव रथकर्त्तेति नियन्तुमशक्यत्वात् । ऐन्द्रं वास्तुमयं चरुं निर्वपेदिति प्रक्रम्य एतया निषादस्थपतिं याजयेदित्यत्रापि निषादानां त्रैवर्णिकस्य स्थपतेर्ग्रहणे षष्ठ्यर्थलक्षणापत्तेर्निषादश्चासौ स्थपतिरिति श्रौतार्थस्य त्यागायोगान्निषाद एव स्थपतिरधिक्रियते ॥ १ ॥

( इति षष्ठाध्याये प्रथमः पादः ॥ )

ऋद्धिकामाः सत्रमासीरन्नित्यादौ क्रियां प्रत्युपादेयस्य कर्तुर्विशेषणं बहुत्वं विवक्षितम् । फलभोक्ता तु क्रियां प्रत्युद्देश्य इति तद्विशेषणं बहुत्वमविवक्षितम्, तेन न समुदायस्य भोक्तृत्वमपि तु प्रत्येकम् । तस्मात् प्रत्येकं कृत्स्नफलार्थिन एव सत्रेऽधियन्ते । एतेनैव दर्शपूर्णमासाभ्यां यजेतेत्यादावेकस्यैव कर्तृत्वमिति व्याख्यातम् ॥ उपक्रान्तं काम्यमिष्ट्यादिकर्म मध्ये कामनानिवृत्तावपि समापनीयमेव तैत्तिरीये देवताभ्यो वा एष आवृश्चते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत न देवताभ्य आवृश्चत इति तदऽसमापने दोषप्रायश्चित्तयोः श्रवणात् ॥ न कलञ्जं[1] भक्षयेदित्यादौ रागतः प्राप्तं कलञ्जादिभक्षणमनिष्टसाधनमिति निषिध्यते न तु नेक्षेतोद्यन्तमितिवत् पर्युदस्यते । अतो न तद्वर्जनात्फलोत्पत्तिरस्ति प्रजापतिव्रतवत् ॥ यावज्जीवमग्निहोत्रं जुहुयादित्यादौ न सन्ततानुष्ठानम् सायं प्रातरित्यनुपादेयगुणयोगात् । तथाच यदा कालः प्राप्तस्तदैव कर्मप्राप्तिः तत्कालविशिष्टजीवनाख्यनिमि-

(१) कालिञ्जशब्दः पुस्तकद्वयेऽपि ।

त्तस्य पुनःपुनरावृत्तावनुष्ठानमपि पुनःपुनरावर्त्तते। एवमन्तः क्रतावपि कपालभेदनादिनिमित्तावृत्तौ नैमित्तिकस्य स्कन्ने जुहोति भिन्ने जुहोतीत्यादेरावृत्तिर्ज्ञेया। एवं गुर्वभिवादाद्यप्यावर्त्तेत निमित्ततः॥ सोमेन यजेत स्वाध्यायमधीयीत प्रजामुत्पादयेदिति सोमविद्याप्रजं नित्यम्। जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवाञ्जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य इत्यृणश्रवणात् तदनपाकरणे च अनधीत्य द्विजो वेदाननुत्पाद्य सुतानपि। अनिष्ट्वा शक्तितो यज्ञैर्मोक्षमिच्छन् व्रजत्यध इति दोषस्मरणाच्च॥ २॥

(इति षष्ठाध्याये द्वितीयः पादः॥)

नित्येषु यथाशक्त्यऽङ्गानामुपसंहारः॥ काम्येषु तु सर्वाङ्गोपसंहारेणैव भाव्यम्॥ व्रीह्याद्यभावे तत्सादृश्यात्प्रतिनिधित्वेनोपात्तेष्वपि नीवारेषु न प्रधानकर्म भिद्यते। अतो मुख्याभावे प्रतिनिधिरुपादेयः॥ तत्रापि देवताया आहवनीयाद्यग्नेर्मन्त्रस्य प्रयाजप्रोक्षणादिकर्मणश्च प्रतिनिधिर्नास्ति, तत्तज्जन्यादृष्टस्याऽन्यतःसिद्धौ प्रमाणाभावात्॥ नीवारादिस्तु प्रत्यक्षेण पुरोडाशं साधयतीति युक्तस्तत्र श्रुतद्रव्यापचारे प्रतिनिधिः। अयज्ञिया वै माषा वरकाः कोद्रवा इत्यऽयज्ञियत्वेन प्रतिषिद्धानां माषादीनां मुद्गादिसादृश्येऽपि न मुद्गादिप्रतिनिधित्वम्॥ यजमानस्य प्रतिनिधिर्नास्त्येव॥ यत्र तु सप्तदशावरास्सत्रमासीरन्नित्यादौ सत्रे कस्यचिद्विनाशे (शस्तत्र) यद्यपि तत्कार्यकरणार्थमन्यः प्रतिनिधेय एव, तथापि नासौ फलभाक् पूर्वप्रवृत्तत्वाभावात्। कार्यमात्रं तु तेन साधयितुं शक्यम्। कर्त्रन्तःपातित्वाच्चास्य फलिसंस्कारा भवन्ति॥ खदिरव्रीह्यादिस्थाने कदरनीवारै(रादिभि)रुपक्रान्तेऽपि प्रयोगे मुख्यद्रव्यलाभे सति मुख्यमेवोपादद्यात्

खादिरादिकं पशुनियोजनाद्यर्थमुपादद्यात् ( ददीत [१] ) कृते तु नियोजनादौ मुख्यं प्राप्तमपि नोपादद्यादित्यपि केचित् ॥ प्रधानमात्रनिर्वृत्तिपर्याप्तस्य मुख्यस्य लाभे शेषकर्मपर्याप्तोऽपि प्रतिनिधिर्नोपादेयः ॥ ३ ॥

( इति षष्ठाध्याये तृतीयः पादः ॥ )

अवदाननाशे पुनरायतनादवदानमिति कल्पसूत्रकाराः मध्यात् पूर्वार्द्धाच्चावद्यतीति शास्त्रात्सकृन्मध्यादेरवत्ते पुनस्तदभावान्नायतनान्न्यायतोऽवदानं प्राप्नोति किं तु हविरन्तरं सम्पादनीयम् । तच्च यस्य सर्वाणि हवींषि नश्येयुरपहरेयुर्वा आज्येनैता देवताः परिसंख्याय यजेतेति वचनादाज्यं भवति ॥ यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदित्यार्त्तिमुद्दिश्य पञ्चशरावो विहितः । आर्तिश्चाऽविशेषेण यत्किंचिद्विषयिणी सर्वदैवास्तीति सर्वदा पञ्चशरावः प्राप्तोस्तीति अनियतः शास्त्रार्थो मा भूदित्यगत्या हविरित्यनेन विशेष्यते। तावता च परिसमाप्ते वाक्ये उभयमित्यविवक्षितं ग्रहैकत्ववत् । वाक्यभेदप्रसङ्गात् । तेन न (च) सायंदोहार्त्तिरेव वा प्रातर्देहार्त्तिरेव वा न निमित्तम् किंतूभयमपि परस्परानपेक्षं निमित्तमिति वाक्यार्थः । एतच्च दर्शात्कर्मान्तरं न तु तत्प्रतिनिधिरिति पञ्चशरावं कृत्वा दर्शोप्यनुष्ठेय एव ॥ ४ ॥

( इति षष्ठाध्याये चतुर्थः पादः ॥ )

यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेद्ये मध्यमास्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं [२] ये ऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमिति । अत्र न तण्डुलानां

(१) टिप्पणीभूतमिदं पुस्तके मिश्रितमिति प्रतिभाति ।
(२) दध्नश्चरुमिति ख-पु० पा०

विभागो विधीयते मध्यमादिवाक्यप्राप्तत्वात् । नापि दधिशृतयोरधिकरणत्वम् अभ्युदयेष्टिप्रकरणे सह श्रपयतीतिवचनेन तस्यापि प्राप्तत्वात् । किं तु तण्डुलान्विभजेदित्यस्य तण्डुलोपलक्षितं हविस्त्रयं देवताभ्य उपनयेदित्येव । ततश्च न प्रकृतहानाऽप्रकृतप्रक्रिये प्रसज्येयातामिति नात्र प्रायश्चित्तरूपं कार्यं विधीयते । प्रकृतस्य च हविस्त्रयस्य अत्यक्तयागसम्बन्धस्य देवतान्तराकाङ्क्षायां मध्यमादिवाक्यान्युपतिष्ठन्ते । तत्र दात्रादिगुणविशिष्टमेकमग्न्यादिदेवताकारकमेकेन विधिना विधातुं शक्यम् । ततश्च यदि बिभियादाभि मोदेष्यतीति महारात्रे[1] हवींषि निर्वपेत्फलीकृतैस्तण्डुलैरुपासीत अर्धं दधि हविरातञ्चनार्थं निदधाति अर्धं न यद्यभ्युदियात्तेनातञ्च्य प्रचरेत् यद्यु न प्रातरन्येद्युरेतेन ब्राह्मणं भोजयेदिति दर्शनमुपपद्यते । अन्यथा लौकिकयोरेव दधिशृतयोश्चरुद्वयसम्भवेन कालापराधदोषे ऽपहृते तदानीमेव दर्शः कर्त्तव्यः स्यात् । तत्रातञ्चनार्थं दध्यर्द्धस्थापनमनर्थकं स्यात् । अस्माकं तूपक्रान्तं प्रयोगं समाप्य श्वो दध्यन्तरमुत्पाद्यमिति तदर्थवद्भवतीति । यद्यपि चतुर्दश पूर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायामितिलिङ्गोपोद्बलिता उपांशु पौर्णमास्यामिति पौर्णमासीमात्रग्रहणाद्दर्शे उपांशुयाजो नास्ति तथापि बह्वृचब्राह्मणे तद्दर्शनादभ्युदयेष्टौ उपांशुयाजहविषोपि देवतापनयेपि देवतान्तरयोगानुक्तेरुपांशुयाज एव लुप्यते । अनिरुप्ते निरुप्ते वा प्रायश्चित्तमिदं सममिति । इदम् अभ्युदयेष्ट्याख्यम् । निर्वापो वैकृतीभ्यः स्यादनिरुप्ते यदोदयः ॥ चन्द्रस्येति शेषः । किंचिन्निरुप्ते शिष्टस्य तूष्णीं निर्वाप इष्यते । ज्योतिष्टोमे यदि बहिष्पवमानं प्रसर्पतां प्रतिहर्ता ऽपच्छिद्यात्[2] तसर्ववेदसं दद्या-

( १ ) आभि नोदेष्यतीति महापात्रे –इत्यपि क्वचित्पाठः ।

( २ ) अपच्छिद्येतेति पाठान्तरम् ।

उद्गातापच्छिद्यादक्षिणं यज्ञमिष्ट्वा तेन पुनर्यजेतेत्यत्र युगपद्द्वयोरपच्छेदे ऽन्यतरत्प्रायश्चित्तं कर्त्तव्यम् । अपच्छेदयोः पर्यायपर्ये तु पूर्वं परमजातत्वादबाधित्वैव जायते । परस्यानर्थोत्पादान्नाद्याऽबाधेन सम्भव इति न्यायेनासंजातविरोध्यपि पूर्वं संजातविरोधिनापि निरवकाशेन परेण प्रायश्चित्तेन[1] बाध्यते । पश्चादुद्गात्रपच्छेदे सर्वस्वं स्यात्पुनः क्रतौ । आवृत्तिरह्नस्यैवा ऽपच्छेदो ऽहर्गणे यदि ॥ ५ ॥

( इति षष्ठाध्याये पञ्चमः पादः । )

सत्रेषु तुल्यकल्पानामेवाधिकारः । अन्यथा वासिष्ठानां प्रयाजो नाराशंस इतरेषां तनूनपादिति कल्पभेदेनान्यतरग्रहे इतरोननुगृहीतः स्यात् । राजपुरोहितौ सायुज्यकामौ यजेयातामित्यत्र भिन्नकल्पयोरपि राजा च पुरोहितश्च तयोरधिकारः । अत्र समासान्तरोपादाने लक्षणापत्तेर्न द्वयो राज्ञोर्द्वौ पुरोहितौ वा एकस्य वा द्वौ पुरोहितावत्र ग्राह्यौ । आद्ये राजपदवैयर्थ्यात् । द्वितीये पुरोहितं वृणीत इत्युपादेयपुरोहितगतमेकत्वं विवक्षितमिति द्वयोः पुरोहितयोरसम्भवः । य एव कश्चित्स्तोमभागानधीयीत स एव वासिष्ठ इत्यवासिष्ठस्यापि स्तोमभागविदो ब्रह्मत्वाभ्यनुज्ञानाद्वासिष्ठो ब्रह्मेति वाक्यमनादृत्य वैश्वामित्रो होतेतिवचनाद्विश्वामित्रस्य तत्समानकल्पानां च सत्रेऽधिकारः । ते (ये) सर्वे साग्निकास्तेषां सत्रं साधारणं मतम् ॥ ६ ॥

( इति षष्ठाध्याये षष्ठः पादः ॥ )

स्वदाने देयमात्मीयं न भूमिर्न तुरङ्गमः । नासत्संपाद्य दातव्यं न शुश्रूषुश्च शूद्रकः । पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशाः पञ्चपञ्चाशतः सप्तदशाः पञ्चपञ्चाशत

---

(१) निरवकाशो न परेण बाध्यते प्रायश्चित्तेन बाध्यत इति ख-पुस्तके पाठः ।

एकविंशाः विश्वसृजामयनं सहस्रसंवत्सरमित्यत्र विश्वसृजां सत्रे संवत्सरशब्दो न कालवाची किं तु त्रिवृदादिपदैः स्तोमविशिष्टमऽहरुच्यते। नाहःसंघ, स्ततोऽहस्सु गौणी संवत्सराभिधा॥ ये त्वत्र सहस्रायुषां गन्धर्वाणां वा रसायनसिद्धानां वा नृणां वा कुलं कल्पो वा मासेषु वा संवत्सरत्वं द्वादशरात्रिषु वा संवत्सरशब्द इति विकल्पा दर्शितास्ते सर्वेप्युक्तिमात्रनिरास्याः। चतुर्विंशतिपरमाः सत्रमासीरन्निति नियमान्नार्द्धतृतीयैर्यजमानशतैरप्यनुष्ठेयमिति ज्ञेयम्॥ ७॥

( इति षष्ठाध्याये सप्तमः पादः॥ )

चतुर्होतृहोम उपनयनाहुतिः स्थपतीष्टिरवकीर्णिपशुश्चेत्यादिकं लौकिकेऽग्नावेव, न तदर्थमाधानसिद्ध आहवनीयोऽपेक्ष्यते॥ अग्नीषोमीयं पशुमालभेतेत्यत्र पशुश् छागस्य वपाया मेदस इति मन्त्रवर्णाच्छाग एव ग्राह्यः॥ ८ पादः॥

इति भाट्टभाषाप्रकाशे षष्ठोऽध्यायः॥ ६॥

निरूपित उपदेशः अतिदेश इदानीं निरूप्यते। तत्र दर्शपूर्णमासयोर्ज्योतिष्टोमे च प्रयाजादयो दीक्षणीयादयश्च धर्माः श्रूयन्ते। ते न केवलं यज्यर्थाः येन सर्वत्र यजेरेकत्वात्परिप्लवेरन्। अपि तु प्रधानभूतापूर्वप्रयुक्ताः। अपूर्वभावना च सर्वत्र भिद्यते। अतस्तत्तत्प्रकरणव्यवस्थिताः सन्तोऽन्यत्रातिदेशेनैव गच्छन्ति। स चातिदेशस्त्रिविधः प्रत्यक्षवचनान्नामधेयाच्चोदनालिङ्गानुमितवचनाच्च। आद्यं यथा इषावेकाहे ज्योतिष्टोमविकारे इषुविष्टुतिं करोतीत्यादिनापि चोदकप्राप्तानां विष्टुत्यादीनां विकारं विधाय समानमितरच्छ्येनेनेति इतरत्, लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादिकं श्येनाङ्गजातमतिदिश्यते

नेनेन। एतद्ब्राह्मणान्येव पञ्च हवींषीति वैश्वदेवपर्वणि यद्ब्रा-
ह्मणम् तदेव वरुणप्रघासेष्वतिदिश्यते । तेन तत्रापि वार्त्रघ्ना-
न्येतानि हवींषीत्याद्याः स्तुतयो नव प्रयाजा इत्यादयो विध-
यश्चाप्युपतिष्ठन्ते ॥ १ ॥

( इति सप्तमाध्याये प्रथमः पादः ॥ )

गीतिषु सामाख्येत्युक्तम् । कवतीषु रथन्तरं गायतीत्यादौ अभि त्वा शूर नोनुम इत्यस्यामृचि या गीतिः सा कवतीष्वतिदिश्यते। गीतिविशिष्टाया ऋचः सामशब्दार्थत्वे तत्र संभवेदेवेति गीतमात्रं सामेत्यत्रोपपादितम् ॥ २ ॥

( इति सप्तमाध्याये द्वितीयः पादः ॥ )

कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीत्यत्राऽपूर्वं कर्म विधीयत इत्युक्तम् । तत्र नैयमिकाग्निहोत्रवाचिशब्दप्रयोगस्तद्धर्मानतिदिशति । गुणयोगमन्तरेणान्यशब्दस्यान्यत्र प्रयोगादर्शनात् । एवं वरुणप्रघासेषु वारुण्या निष्कासेन तुषैश्चावभृथं यन्तीत्यत्रापि कर्मान्तरे सौमिकावभृथशब्दस्तद्धर्मातिदेशार्थ इति नामातिदेशोयम् ॥ ३ ॥

( इति सप्तमाध्याये तृतीयः पादः । )

सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्रास्ति विध्यन्तापेक्षा । नचासावत्र श्रूयत इत्यनुमीयते नूनमयमन्यतःसिद्धामितिकर्त्तव्यतामुपजीव्य फलं साधयतीति। सा च वैदिकत्वसामान्याद्वैदिक्येवोपतिष्ठते न लौकिकी।अतः प्रकृतिवद्विकृतिः कर्तव्येति तत्राप्यानुमानिकाद्वाक्यान्नामातिदेशो बलवाञ्छ्रौतत्वात् । तेन गवामयने ज्योतिर्गौऽरायुरित्याद्येकाहसंज्ञावन्ति कर्माणि गणान्तःपातित्वेपि न द्वादशाहधर्माँल्लभन्ते ऽपि तु नाम्नो बलवत्त्वात्तद्धर्मानेव ॥ ४ ॥

( इति चतुर्थः पादः ॥ )

इति भाट्टभाषाप्रकाशे सप्तमोऽध्यायः ॥ ७ ॥

अथ विशेषतोतिदेशो निरूप्यते । सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यादिष्विष्टिषु निर्वपतिस्तद्धितेन देवतानिर्देश एकदैवत्वमौषधद्रव्यकत्वमित्यादिसामान्यादाग्नेयस्य विध्यन्त उपतिष्ठते । तेन यथाग्नेयेन स्वर्गः कृतस्तथा सौर्येण ब्रह्मवर्चसमिति कथंभावपूरणं सिद्धम् । एवमनेकदेवतेषु अग्नीषोमीयस्यैन्द्राग्नस्य वा ऽक्षरसंख्यासामान्याद्विध्यन्तो ज्ञेयः । ऐन्द्रपुरोडाशे देवतासामान्यात्सान्नाय्यधर्मप्राप्तावपि हविषो यागं प्रति देवतापेक्षया प्रत्यासन्नत्वेन बलीयस्त्वात्पुरोडाशधर्मा एव । कृष्णलचरौ औषधवाचिचरुशब्दप्रयोगात्तद्धर्मा एव । अव्यक्तचोदनासु सोमेन यजेतेतिवत् तद्धितचतुर्थीमन्त्रवर्णैः स्पष्टं यागार्थत्वेन श्रुतदेवतासु विश्वजिता यजेतेत्यादिषु सौमिको विध्यन्तः ॥ १ ॥

( इत्यऽष्टमाऽध्याये प्रथमः पादः ॥ )

आज्यद्रव्यकेषूपांशुयाजस्य पयोदध्यामिक्षादिषु सान्नाय्यस्य एवं दैक्षे चाग्नीषोमीयपशौ तु कठिनत्वसामान्याद्देवतैक्याच्चाग्नीषोमीयपुरोडाशविध्यन्तः प्राप्तोपि देवतासामान्यापेक्षया हविषो बलीयस्त्वात्पशुप्रभवत्वसामान्यात्सान्नायविध्यन्तः । तत्रापि साक्षात्पशुप्रभवत्वेन गतिमत्त्वेन च पय एव घनीभूतमामिक्षेत्युक्तम् । अतस्तत्र पयोधर्मा एव प्रवर्त्तन्ते । पश्वन्तरेषु त्वग्नीषोमीयपशोरेव विध्यन्तः । आलम्भविशसनादिसामान्यात् । द्विविधो द्वादशाहः सत्रमहीनश्च । अहर्गणा अपि तादृशा एव । अतः सत्रेषु सत्रात्मनो द्वादशाहस्य विध्यन्तः अहीनेष्वहीनात्मन इति व्यवस्था ॥ २ ॥

( इत्यष्टमाऽध्याये द्वितीयः पादः ॥ )

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन् सारस्वतं चरुं बार्हस्पत्यं चरुमित्यादौ स्थानसामान्यापेक्षया देवतासामान्यं प्रत्यासन्नमिति प्रथमेपि तृतीयस्याग्नीषोमीयस्य विध्यन्तः चरमेपि

वरमेपि प्रथमस्याग्नेयस्य ॥ ३ ॥

( इति तृतीयः पादः। )

जुहोत्युत्पन्नानामग्निहोत्रादीनां दर्विहोमा इति नाम। ते ऽपूर्वा न कुतश्चिद्धर्मान् गृह्णीयुः ॥४॥

( इति चतुर्थः पादः॥ )

इति भाट्टभाषाप्रकाशे ऽष्टमोऽध्यायः ॥ ८ ॥

---

अपूर्वप्रयुक्ता धर्मा इत्युक्तं सप्तमाद्ये। ते च त्रिविधा वाक्यसंयुक्ता लिङ्गसंयुक्ताः श्रुतिसंयुक्ताश्च। तत्र प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्तीति प्रोक्षिताभ्यां पिनष्टीत्यादौ प्रोक्षणस्य हन्तिपिनष्टिस्वरूपे आनर्थक्याद्वाक्येनाऽपूर्वार्थत्वं प्रोक्षणादेः। अगन्म सुवः सुवरगन्म, अग्नेरहमुज्जितिमनूज्जेषमित्येतौ मन्त्रौ क्रत्वङ्गत्वान्नह्यऽपूर्वमुलङ्घ्य श्रूयमाणफलदेवतार्थत्वं भजतो ऽपि तु क्रत्वपूर्वप्रयुक्तमेव फलदेवतं प्रकाशयत इति सेयमतिदेशेनापूर्वार्थता मन्त्रयोः[1]। व्रीहीन् प्रोक्षतीत्यत्र व्रीहिरूपद्रव्यं त्रीन् परिधीनित्यत्र त्रित्वसंख्या सूर्पेण जुहोति तेन ह्यन्नं क्रियत इत्यत्रान्नकरणकक्रियारूपो हेतुः। चतुर्होत्रां पौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्यामित्यत्र पौर्णमास्याद्याख्यौ समुदायौ। न च प्रोक्षणं मन्त्रसूर्पचतुर्होत्रादीनां स्वरूपेण प्रयोजकम्। आनर्थक्यात्। यत्स्वीयमऽपूर्वसाधनीभूतं हवीरूपत्वम् तद् स्वपेण। तच्च नीवारादिष्वपि अविशिष्टम्। अतस्तेष्वपि प्रोक्षणादीनां प्राप्तिरस्तीति व्रीहिश्रुतिमनादृत्यैवापूर्वार्थता प्रोक्षणादेः। एवं धर्माणामपूर्वार्थत्वे सिद्धे विकृतिष्वप्युलूखलादीनां प्रोक्षणम्। अगन्म ब्रह्मवर्चसं,

---

(१) अगन्मुखः सुवणन्म अग्नेरहमुज्जिति मनुजेषमित्यतौ मन्त्रौ क्रत्वंगत्वान्नापूर्वमुलङ्घ्य श्रुतमातफलदेवतार्थत्वं भजतोऽपितु क्रत्वपूर्वप्रयुक्तमेव फलदैवतं प्रकाशयत इति। सेयं तिगेनापूर्वार्थत्वामन्त्रयो"रितिकपुस्तकपाठः, ख-पुस्तकं त्वत्र नास्त्यत्र हि अष्टमाध्यायारम्भात्प्रभृति तदीयतृतीयपादारम्भं यावत् त्रुटितमत्र।

सूर्यस्याहमुज्जितिमित्यूहेन मन्त्रो नीवारेषु प्रोक्षणम् द्विपरिधिकेष्यूहेन मन्त्रो विनाप्यन्नकरणं सूर्पस्य होमसाधनत्वं विनापि समुदायं चतुर्होत्राभिमर्शनं च सिद्ध्यति । ततश्च मन्त्रसामसंस्काराणां द्वारान्तरसंबन्धनिमित्तान्यथाभावलक्षण ऊहश्चिन्तनीय इति सिद्धम् । प्र वो वाजा इत्याद्येकादशर्चः पठितः । त्रिः प्रथमां त्रिरुत्तमामन्वाह ततः पञ्चदश संपद्यन्त इत्यत्र त्रिरभ्यासः प्राथम्यधर्म इति या काचित् प्रथमे स्थाने पठ्यते सा सर्वापि त्रिरभ्यसनीया। प्रवोवाजीया तु लक्षणयोपस्थितेति नायमत्र धर्मः। तेन यत्र कुत्रापि या प्रथमा सा ऽभ्यसनीया । दर्शपूर्णमासावारभ्यमाणोन्वारम्भणीयां कुर्यादित्यत्र दर्शपूर्णमासयोरप्रवृत्तस्य या प्रथमं प्रवृत्तिः सा आरम्भः। नवसो (न च सः) द्वितीयादिप्रयोगे प्रवृत्तिस्तुप्रवृत्तस्यैवाभ्यास इत्युच्यते नत्वसावारम्भ इति प्रथमप्रयोगाद्यागेनान्वारम्भणीया न प्रतिप्रयोगम्। दर्शपूर्णमासयोरग्नये जुष्टं निर्वपामीति मन्त्रः । सौर्ये तु चरौ अग्निपदस्थाने सूर्यायेति पदं प्रयोज्यम्। एवं धान्यमसि धिनुहि देवानित्यत्र धान्यपदस्थाने यत्र तरस-मयाः पुरोडाशा भवन्ति शाक्यानामयने तत्र मांसमसीत्यूहः। ये च यज्ञपतिं बर्द्धानित्यत्र यच्छब्दार्थस्य प्राधान्याद्बहुकर्तृके यज्ञपतिपदप्राधान्यार्थं नोहमर्हति। आशास्ते यं यजमान इत्यादौ तु तस्यैव प्राधान्याद्बहुकर्तृकेषूहः आशासत इमे यजमाना इति। यज्ञायज्ञीये श्रूयते न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयमिति श्रुत्यैव गिरापदस्थाने इरापदं प्रक्षिप्यते । तदपि प्रगीतमेव प्रयोक्तव्यं स्थानधर्मत्वात् ॥ १ ॥

( इति नवमाध्याये प्रथमः पादः ॥ )

यत्र तु नैवारं चरुं निर्वपेदिति प्रत्यक्षा चोदना तत्रापि व्रीहिस्थानापन्ना नीवारा व्रीहिधर्माँल्लभन्ते ॥ २ ॥

( इति नवमाध्याये द्वितीयः पादः ॥ )

तेन व्रीहीणां मेध सुमनस्यमान इत्यादौ नीवाराणां मेध इ-त्यूहः सिद्धः। अग्नीषोमीये पशौ अदितिः पाशं प्रमुमोक्त्वेतमित्येक-वचनान्तो मन्त्रः पठ्यते। अपरस्तु अदितिः पाशान् प्रमुमोक्त्वेता-निति बहुवचनान्तोपि तत्रैव पठ्यते। सोपि गुणे त्वन्याय्यकल्प-नेतिन्यायेन बहुवचनस्यापि पशावयवाभिप्रायेण योजयितुं शक्यत्वात् तत्रैवावतिष्ठते न तु बहुपशुकेषूत्कृष्यते। तथा द्विब-हुपत्नीकेपि यजमाने पत्नीं संनह्येत्यस्य नोहः। अविशिष्टस्याम्ना-नस्यैकपत्नीकप्रयोगविषये संकोचयितुमशक्यत्वात्। अत एवै-कवचनस्य निर्देशमात्रार्थत्वेनादृष्टार्थत्वान्न बहुपत्नीकस्य विकृताव-प्यूहः। प्रतिनिधौ चाऽविकारात्। यत्र व्रीह्यादयः प्रतिनिधित्वे-नोपादीयन्ते तत्राऽविकारेणैव मन्त्रः प्रयोज्यः॥ ३॥

( इति नवमाध्याये तृतीयः पादः॥ )

अभ्युदयेष्टौ दध्नश्चरुमिति पर्येति चरुमिति च दधिशृतयोः सप्तमीनिर्देशात्प्रणीताकार्ये विनियोग इति मन्यमानस्योत्तरं कर्मान्तरपक्षे तथास्तु। प्राकृतानामेव तेषां पूर्वाभ्यो देवताभ्योप-नयमात्रं विधीयत इत्युक्तं षष्ठे। तेन तत्र प्रदेशधर्मा एव प्रवर्त्तन्त इति। अश्वमेधे ईशानाय पयस्वत आलभेतेति यागं विधाय पर्य-ग्निकृतानारण्यानुत्सृजतीति पर्यग्निकरणान्ताङ्गरीतिर्विधीयते। तथा च प्रत्यक्षविहितया निराकाङ्क्ष ईशानप्रयोगवचनो न चोदकमपेक्षते॥ ४॥

( इति चतुर्थः पादः॥ )

इति भाट्टभाषाप्रकाशे नवमोऽध्यायः॥ ९॥

उपकारपृष्ठभावेन पदार्थानां प्राप्तिरिति स्वयंदितं बर्हिर्भव-तीत्यादौ लवनादयस्तत्साधनभूता मन्त्राः परश्वादयश्चातिदेशा-त्प्राप्ता अपि बाध्यन्ते। एवं प्राजापत्यं घृते चरुं निर्वपेच्छृतेकृ-

ष्णलमायुष्काम इत्यत्रापि वैतुष्यलक्षणोपकाराभावात् कृष्ण-
लेषु नावघातः । सोमे दीक्षणीयाद्यर्थं राजसूयेनुमतीष्ट्याद्यर्थं
स्त्रार्थं च नारम्भणीयापेक्ष्यते । दर्शपूर्णमासावारप्स्यमान
इति वचनादन्यत्र तदप्रवृत्तेः । खलेवाली यूपो भवतीत्यादौ सि-
द्धायां खलेवाल्यां यूपमाच्छेत्स्यता होतव्यमिति च्छेदनार्था आहु-
तिर्लुप्यते । छेदनाभावे द्वारलोपात् । अच्छेत्सस्याभिमुखमित्यर्थः(?)
(आच्छेत्स्यता च्छेत्तुमभिमुखेनेत्यर्थः) । उत्तमे प्रयाजे वक्ष्यमाणप्र-
धानदेवतास्मारकाणामग्निं स्वाहा विष्णुं स्वाहेत्यादीनाम् अग्न्या-
दिपदानां सौर्यादिषु विकृतिषु निवृत्तिर्लुप्तार्थत्वात् । ज्योतिष्टो-
मेऽग्नीषोमीयपशुधर्मसंदंशे अग्नीषोमीयं पशुपुरोडाशं निर्वपतीत्ययं
पुरोडाशोऽग्नीषोमीयपश्वङ्गं सत् तद्गतदेवतासंस्कारेणाऽदृष्टेनैव द्वा-
रेणोपकुर्वन्नदृष्टार्थ इत्यन्यदेवत्येपि पशौ निवर्त्तते । सौर्ये चरौ चरु-
शब्दो याज्ञिकप्रसिद्ध्या ऽनवस्रावितान्तरूष्मपक्व ओदने वर्त्तते ।
आदित्यः प्रायणीयश्चरुरित्युक्त्वाऽदितिमोदनेनेति वेदेप्यनुवा-
दात् । तेन चरुमुपदधातीतिस्थाल्यां चरुशब्दो गौणः चरुरो-
दनभेदः स्यात् स्थाल्यामेव स पच्यते तस्मिन् पेषः संयवनं
संवापस्तापनमित्यादीनां लोपः ॥ १ ॥

( इति दशमाध्याये प्रथमः पादः )

कृष्णलचरौ घृते श्रपयतीतिवचनात्पाकः कर्त्तव्यः । स च
रूपरसपरावृत्तिलक्षणस्य श्रपणस्य मुख्यस्य तत्रासम्भवादुष्णी-
करणमात्रम् । पुरोडाशानां स्रुच्यसंसर्गार्थे उपस्तरणाभिघारणे
कृष्णलेषु तत्संसर्गासम्भवाल्लुप्येते । चतुरवत्तं जुहोतीत्यप्युपस्त-
रणाभिघारणद्व्यवदानप्राप्तचतुःसंख्यानुवादेनावत्तहोममात्रं वि-
धीयते इति चतुष्ट्वस्याविवक्षितत्वान्न तत्प्रापकम् । चुश्चुषाकारं
भक्षयन्तीतिवचनात्पाकवत्कृष्णलानां भक्षणमपि गौणं चुश्चुषा-
कारं विधीयते । ऋत्विग्भ्यो दक्षिणां दद्यादिति दानं दृष्टार्थत्वा-

ानमनार्थं तेषां भृतिरेव। हविःशेषदानं तु न तथा। दत्तस्य
ानायोगेन प्रतिपत्तिमात्रत्वात्तस्य। आनतिरूपकार्याभावादेव
त्रैष्टृत्विग्वरणं दक्षिणा च नास्ति। मृतेऽयायामायुराशास्त इत्या-
दीनां लोपः। अङ्गीकृतमरणस्य स्वर्गकामस्य विहिते सर्वस्वा-
रनाम्नि एकाहे आर्भवस्तोत्रकाले ब्राह्मणाः समापयत मे यज्ञमि-
ति प्रैषमृत्विग्भ्यो दत्त्वा यजमानो म्रियते तत्रापि श्रौतप्रैषव-
लाद् प्राग्भृतैरेव ऋत्विग्भिः क्रतुसमापनं कर्त्तव्यम्। यथोक्तम्
यजमानस्य मरणे नार्थिन इज्यां प्रवर्त्तयन्तीति तत्राप्यार्भवात्माक्
आयुराशास्त इत्याद्यस्ति। हिरण्यमात्रेयाय ददातीत्यादिकं तु
सत्रेपि भवत्येव। आधाने पवमानेष्टौ अतिदेशादग्निहोत्रहवण्या
हवींषि निर्वपन्तीतिप्राप्तायाः अग्निहोत्रहवण्या अग्निहोत्रस्यानार-
म्भात्तद्धवनसाधनत्वाभावेपि तस्या यज्ञैः केतुभिः सहेति तदर्थं
प्रागेव परिकल्पितत्वाद् विगुणयापि तयैव निर्वापः कर्त्त-
व्यः। द्यावापृथिवीभ्यां धेनुमालभेत वायव्यं वत्समैन्द्रमृष-
भमिति धेन्वादिशब्दानां गोजातीये रूढत्वाच्च छागस्य वपाया
इतिलिङ्गप्राप्तस्य निवृत्तिः। वायव्यं श्वेतमालभेतेत्यादौ साधारणैः
श्वेतादिगुणैस्तु न तस्य निवृत्तिः। पितृभ्यो ऽग्निष्वात्तेभ्यो भि-
मान्यायै दुग्धे मन्थमिति श्रुते मन्थे पूर्वं श्रपणं पश्चात्पेषणम्
प्रकृतौ तद्विपरीतम् ततः पदार्थधर्मस्य क्रमस्य बाधेपि न प्राकृतः
पदार्थो निवर्त्तेत इति मन्थेऽपि प्राकृतमेव पेषणम् ॥ २ ॥

( इति दशमाध्याये द्वितीयः पादः ॥ )

पुनराधेये पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वास इत्या-
दिदक्षिणा एका देयेत्येवमादिकाया अग्न्याधेयदक्षिणाया निवर्ति-
का वैकृत्यैवानतेः सिद्धत्वात्। उभयीर्ददातीति तु न समुच्चयविधाय-
कम् अग्न्याधेयिकीः पुनराधेयिकीश्च ददातीत्युभयापेक्षा तत्प्रवृत्तेः।
पाकाभिघारणादयोन्वाहार्यधर्मा वत्सवद्वास आदौ न प्रवर्त्तन्ते

स्वरूपनाशाच्च स्वादिमादिप्रयोजनाभावाच्च । गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेत्यत्र तस्येति पदं वाक्यावगतं गवादि त्यक्त्वा प्रकृतं क्रतुं न ब्रूते वाक्यात्प्रकरणस्य दुर्बलत्वात् प्रकृतत्वेनैव तत्प्राप्तेस्तत्पदस्यानर्थक्यापाताच्च। नाप्यजादीन्, तेषां बहुवचनेन निर्देशात्। नाप्यश्वादीन्, अमुख्यत्वात्तेषाम्। तस्मान्मुख्यत्वादसन्तमुपकारकत्वाच्च गोरेव निर्देशः । तेनायमर्थः । गवादिद्रव्याणि तस्याः गोर्द्वादशशतं दक्षिणेति। तस्माद्गवामेषा संख्या। सा च दक्षिणा विभज्य देया विभागश्च द्वादशाहे दीक्षाक्रमवाक्ये अर्द्धिनो दीक्षयन्ति तृतीयिनो दीक्षयन्ति पादिनो दीक्षयन्तीतिसमाख्याबलात्। स चेत्थम्— कृत्स्नं द्रव्यं पञ्चविंशतिधा विभज्य मुख्येभ्यश्चतुर्भ्यो द्वादश भागान् अर्द्धिभ्यः षट् तृतीयिभ्यश्चतुरः पादिभ्यस्त्रीनिति विभज्य दद्यात्। मुख्याद्याश्च लब्धं द्रव्यं साम्येन विभज्य गृह्णीयुरिति। अश्वादीनां त्वऽनिवृत्तिरेव। अस्याः प्रकृता गोसंख्याया निवृत्तिः । नैमित्तिक्या यदि सोममपहरेयुरेकां गां दक्षिणां दद्यात् अभिग्धे [१]सोमे पञ्च गा दद्यादिति च ॥ ३ ॥

( इति दशमाध्याये तृतीयः पादः ॥ )

नक्षत्रेष्टौ अग्नये स्वाहा कृत्तिकाभ्यः स्वाहेत्यादय उपहोमा न प्राकृतानां नारिष्टानां कार्ये विहिता इति न तान्बाधन्ते । ततस्तत्रोभयेषां होमानां समुच्चयः। शरमयं बर्हिर्भवतीति तु बर्हिःशब्दलक्षिते कुशकार्ये विहिताः शराः कुशान्बाधते। विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना। आग्नेयोष्टाकपाल इत्यादौ यो विध्युद्देशे देवतावाची शब्दः स एवाग्निमावहेत्यावाहनादिष्वपि प्रयोज्यो न तु तत्पर्यायः मन्त्रैरेव मन्त्रार्थः स्मर्त्तव्य इतिवदयं नियमः । एवं विकृतौ सूर्यादिपदमेव निगमेषु प्रयोज्यं नत्वादित्यादिपदम्। अग्नये

(१) अभिग्ध इति ख-पु. पा. ।

[...]वकार्यसादौ तु पदद्वयमपि निगमेषु प्रयोज्यम् अन्यतरेण पदे- [...]तरगुणास्योपस्थित्ययोगात्। पृषदाज्येनानुयाजान्यजतीति न [...]पृषदाज्यमिति द्रव्यान्तरं पृषच्च तदाज्यं चेतिव्युत्पत्त्या तस्य [...]शब्दस्य चित्रत्वविशिष्टाज्यवाचित्वात्। ततश्च यथा जुषन्तां [...]युज्यं पय इति पयस्यां पयःशब्दो वक्ति तस्यास्तदनन्यत्वादे- [...]वमाज्यशब्दोपि पृषदाज्यमिति। ततः देवानाज्यपानावहे- [...]त्यादिष्वाज्यपयुक्तेषु निगमेषु आज्यपशब्देन प्रयाजानुयाजा [...]गृह्यन्त इति न केवलानुयाजनिमित्ते पृषदाज्यपानितिमन्त्रो विक्रियते ॥ ४ ॥

( इति दशमाध्याये चतुर्थः पादः )

यत्र द्यावापृथिव्य एककपालो वैष्णवस्त्रिकपाल एको सा- मिधेनीमिसादौ प्रथमोपस्थितस्य साग्ने कारणाभावादादित ए- केन त्रिभिर्वा मन्त्रैः कपालान्युपदध्यादन्ये लुप्यन्ते प्रयोजना- भावात्। एवं सामिधेन्या अप्याद्याया एवोपादानम्। यत्र सा- मिधेनीविद्धिरेकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येति तत्र प्रा- कृतीभ्यः पञ्चदशभ्यो ऽन्या याः काश्चिदग्निसमिन्धनप्रकाशिका ऋच आनेतव्याः ॥ ५ ॥

(इति दशमाध्याये पञ्चमः पादः ॥)

सत्रेष्वतिदेशादन्येष्वृत्विक्षु प्राप्तेषु ये यजमानास्त ऋत्विज इति यजमाना एव ऋत्विक्कार्ये विधीयन्त इत्यृत्विजां निवृत्तिः। अध्येतृप्रसिद्ध्या द्वादशाहे सत्त्रशब्दस्तत्रासनोपायिचोदितत्वं बहु- यजमानत्वं चास्तीत्यस्य सत्रवद् यजतिचोदनाचोदितत्वमप्यस्ती- ति द्विरात्रादिवदहीनत्वमप्यस्ति ॥६॥

( इति दशमाध्याये षष्ठः पादः ॥ )

अग्नीषोमीयं पशुमालभेतेत्यत्र न कृत्स्नस्य पशोर्हविष्ट्वम- वदानस्य प्रकृतौ हविःसंस्कारार्थत्वेन दृष्टत्वाद्यतोवदानं तद्-

विरिति नियमात्। अवदानं च हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस इत्यादिवाक्ये हृदयादीनामेवावगम्यत इति तेषामेव हविष्ट्वम्। एकादश पशोरवदानानि तानि द्विर्द्विरवद्यतीति संख्याविधानादेकादशभ्य एव परिगणितेभ्यो हृदयादिभ्योऽवदानं नाधिकेभ्यः। चातुर्मास्येषु साकमेधीयान्तर्गतायां गृहमेधीयायामाज्यभागौ यजतीतिचोदकप्राप्ताङ्गानां निवृत्त्यर्थमिति न,परिसंख्यायां दोषत्रयापत्तेः। यावच्छ्रुतेतिकर्तव्यतया,'निराकाङ्क्षा गृहमेधीया न चोदकमाकाङ्क्षते(ति)। तस्मान्न प्राकृतमङ्गं निर्गुणं श्रुतम्। तत्रापूर्वत्वमितिनियमादपूर्वैव गृहमेधीया। तत्रैव स्विष्टकृदिडादिकमपि प्रत्यक्षश्रुतत्वाविशेषात्कर्त्तव्यमेव। प्रत्यक्षश्रुता द्रव्यदेवतादयश्चोदकप्राप्तांस्तान्बाधन्ते। अत एव प्राकृतः खादिरो यूपो भवतीति श्रुतं खादिरत्वमौदुम्बरो यूपो भवतीति श्रुतौदुम्बरतया बाध्यते विकृतौ। तथा सौमारौद्रं चरुं निर्वपेच्छुक्लानां व्रीहीणाम् नैर्ऋतं चरुं निर्वपेत्कृष्णानां व्रीहीणामित्यादावपि द्रव्यगुणविशिष्टकर्मविधानादुपदिष्टा व्रीहयो यवान्बाधेरन्। यद्यपि चतुरवत्ती यजमानः स्यादथ पञ्चावत्तैव वपेत्यत्रावदानोद्देशेन पञ्चसंख्या विधीयते। न चोद्देश्यमवदानं वपां विशेष्टुं शक्नोतीति वपाग्रहणं सर्वेषामवदानानामुपलक्षणम्। ततो हविष्षु त्र्यवदानप्राप्तौ द्विर्द्विरवद्यतीति वाक्यमर्थवद्भवति। पञ्चत्वं चोपस्तरणस्याभिघारणस्य वा वृद्ध्या संपादनीयम्॥७॥

(इति दशमाध्याये सप्तमः पादः॥)

पित्र्येष्टौ नार्षेयं वृणीते न होतारम्। अनारभ्य च श्रूयते यजतिषु ये-यजामहं करोति नानुयाजेष्वित्यादौ चोदकप्राप्तवरणादेर्निषेधे ग्रहणाग्रहणवद्विकल्पः स्यात् ततश्च पक्षे शास्त्रस्य मिथ्यात्वकल्पनापेक्षया वरं लक्षणया पर्युदासाश्रयणम्। न च नानुयाजेष्विति समासापत्तिः। महाविभाषया राज्ञः पु-

हप इत्यादाविव पक्षे समासाभावेप्यऽदोषात् । तदयं वाक्यार्थः।
पित्र्यायामार्षेयवरणव्यतिरिक्तं प्रकृतिवत्कुर्यादिति अनुयाज-
व्यतिरिक्तेषु यजतिषु ये-यजामहं कुर्यादिति च । तस्मान्नात्र
विकल्पः किन्त्वनुष्ठानमेव । तदयं प्रतिषेधाद्बाधः । शरैः कुशानां
प्रत्याम्नानाद्बाधः । स्वयंचोदितेर्थलोपाद्बाध इति त्रेधा बाधः
सिद्धः । न तौ पशौ करोति न सोमे इत्यत्र उपदेशतोतिदेश-
तो वा यथा सोम आज्यभागौ न स्त एवं पशावपि न स्त इति
दृष्टान्तमुखेन प्रतिषेधोयम् । तस्मात्पशावाज्यभागयोर्विकल्पः।
अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीत्यादौ
त्वगत्या वाक्ययोस्तुल्यबलत्वादितरेण बाधायोगाद्विकल्पः ।
जर्तिलयवाग्वा जुहुयात् गवेधुकयवाग्वा जुहुयात् अना-
हुतिर्वै जर्तिलाश्च गवेधुकाश्च पयसाग्निहोत्रं जुहुयादित्यत्राऽना-
हुतिरिति न जर्तिलादेः प्रतिषेधः वाक्यभेदात् । अतः पयसः स्तु-
तिमात्रमेतत् । एवमभिघार्यास्त्वियमृचका नाभिघार्याः होतव्यम-
ग्निहोत्रं न होतव्यमग्निहोत्रमिति नञ्वद्वाक्यम् अभिघार्या एव
तूष्णीमेव होतव्यमित्यनयोरर्थवादः । यदभिघारयेद्रुद्राय संनिद-
ध्यात् यज् जुहुयात् अयथापूर्वमाहुतीर्जुहुयादित्युक्तदोषमङ्गी-
कृत्यापि कर्त्तव्यमभिघारणमतिप्रशस्तत्वादिति । दीक्षितो न
ददाति न जुहोति न पचतीत्यादिः पुरुषार्थानामेव दानादीनां
प्रतिषेधो न क्रत्वर्थानाम्, विकल्पापत्तेः । आहवनीये जुहोतीति-
सामान्यशास्त्रस्य पदे जुहोति वर्त्मनि जुहोतीत्यादिना विशेषशा-
स्त्रेण बाधः । जामि वा एतद्यज्ञस्यक्रियते यदन्वञ्चौ पुरोडाशा-
वुपांशुयाजमन्तरा यजत्यजामित्वायेति पुरोडाशयोर्मध्ये विहितो-
प्युपांशुयाजस्तन्मध्यकाल एव विधीयते । तत्र चोपलक्षणापा-
येप्युपलक्ष्यानपायादसोमयाजिनोग्नीषोमियपुरोडाशाभावेप्याग्ने-
यानन्तरमुपांशु योजत्येवभ व ॥ ८॥

( इत्यष्टमः पादः । )

इति भाट्टभाषाप्रकाशे दशमोऽध्यायः ॥ १० ॥

समाप्तोतिदेशः । एवमुपदेशातिदेशाभ्यां प्राप्तानामङ्गाङ्गिनामियत्तावधारणार्थं तन्त्राध्याय आरभ्यते । तत्र दर्शपूर्णमासयोः षडपि प्रधानानि संहत्य फलं साधयन्ति । तेषां चास्ति सर्वाङ्गोपसंहारापेक्षा । सौर्यादिकाम्यप्रयोगोभ्यस्तः फलमधिकं जनयति । तत्र दृष्टार्थानामवघातादीनां यावत्फलोदयमावृत्तिः चयने तूपधेयोलूखलसंस्कारार्थतया प्राप्तः सर्वौषधस्य पूरयित्वावहन्त्यैथतदुपदधातीतिविहितः सर्वौषधावघातो दृष्टार्थत्वाभावात्सकृदेवाऽनुष्ठेयः । एवं प्रयाजादीनप्यदृष्टार्थान् सकृदेवानुतिष्ठेत् । वसन्ताय कपिञ्जलानालभेतेत्यादौ बहुत्वं त्रित्वेनैवोपात्तमित्यधिकसंख्याया अप्राप्तिः । सान्नाय्ये तु तूष्णीमुत्तरा दोहयित्वेत्यत्र यावत्स्वं दोहनं न त्रित्व एव पर्य्यवसानं बहुत्वस्य । नास्यैतां रात्रिं [पयसाऽग्निहोत्रं जुहुयात्] कुमारा न पयोलभेरन्निइतिवचनात् । दर्शादावाग्नेयादिभावना यद्यपि फलं करणं च पृथक् प्रापयन्ति, तासां कथंभावापेक्षायां तु सकृदाम्नातान्येवाङ्गानि सकृदेवोपतिष्ठन्ते । पौर्णमास्यां पौर्णमास्या यजेतेति त्रयाणां युगपदवगतस्या(मप्य)नुष्ठानं पृथक्प्रयोगे बाधापत्तेस्तन्त्रमङ्गानि । एवमप्य ऽऽग्नेयं कृष्णग्रीवमालभेत सौम्यं चरुमाग्नेयं कृष्णग्रीवमित्यत्राग्नेययोः सान्नाय्ये देशकालकर्त्रैक्याद्दधिपयसोरिव युगपत्प्रदानं न भवति सौम्येन व्यवधानाच्छ्रुतिपाठावगतक्रमबाधाच्च ?

( इत्येकादशाध्याये प्रथमः पादः ॥ )

देशः समादिः कालो दर्शादिः कर्तारोध्वर्य्वादय एतेषां च तन्त्रत्वं न तु प्रतिप्रधानं पृथक्त्वम् । तथापि दर्शत्रिके पौर्णमासत्रिके च कालभेदादग्न्यन्वाधानाद्यङ्गानां पृथक्प्रयोगः । वरु-

णप्रघासेषु विहारद्वयम्, द्वयोरप्याहवनीयो विभज्य स्थापितः। तत्र श्रूयतेष्टौ हवींष्यध्वर्युरुत्तरे विहार आसादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्निस्यत्र देशभेदात्कर्तृभेदाच्चोभयत्रा-ङ्गानामावृत्तिः । चातुर्मास्येषु पञ्चर्त्विज इतिवचनाद्ब्रह्मादय-स्तन्त्रम् । आपराग्निकाः पत्नीसंयाजादयः प्रतिप्रस्थातृकृता [न] मारुत्या उपकुर्वन्तीति तेऽप्यावर्त्तन्ते ॥ २ ॥

( इत्येकादशाध्याये द्वितीयः पादः ॥ )

सर्वक्रत्वपेक्षितानामग्नीनां साधकमाधानं सर्वक्रतुषु तन्त्रमेव। आधानागतपवमानेष्टिमारभ्य पात्राणि धार्याणि यावदन्तम् । आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति तेषामन्ते प्रतिपत्तिदर्श-नात् ॥ ३ ॥

( इत्येकादशाध्याये तृतीयः पादः ॥ )

वाजपेये आग्नावैष्णवमेकादशकपालं निर्वपेद्वामनो [१] दक्षिणा सौमापौष्णं चरुं निर्वपति श्यामो दक्षिणेत्यादौ दक्षिणा-भेदात्कर्तृभेदस्ततश्च प्रयोगभेदः। अन्यथा एकया दक्षिणया ऽऽनतानां पुनर्दक्षिणाम्नानवैयर्थ्यापत्तेः। अश्वप्रतिग्रहेष्ट्यर्थेष्व-नेकेष्वपि पुरोडाशेषु प्रतिपुरोडाशं पृथक्कपालानि । अत्र रक्षो दिवः सपत्नं वध्यासमिति मन्त्रस्तु न प्रसवघातम् । तन्त्रेणैव प्रयोगे तन्नियमफलसिद्धेः। कृष्णविषाणया कण्डूयत इत्युक्तम्। तत्र मन्त्रः कृष्ये त्वा सुसस्याया इति मन्त्रो युगपदनेकेष्वपि कण्डूयनेषु तन्त्रमेव ॥ ४ ॥

( इति चतुर्थः पादः ॥ )

इति भाट्टभाषाप्रकाश एकादशोऽध्यायः ॥११॥

---

पशावैष्टिको विध्यन्तः वितते च पशुतन्त्रे मध्ये पशुपुरो-डाशश्चोद्यते अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडा-

( १ ) अत्र क० पु० वद्धो इत्यधिकम्; ख पु० वही इति।

शं निर्वपतीति । समानविध्यन्ते पशौ पतितः पुरोडाशस्तदीयान्येवाङ्गान्युपजीवति न पुनः स्वार्थं पृथगङ्गान्यनुष्ठापयति । सोयमन्यार्थानुष्ठिताङ्गस्यान्येनोपजीवनं प्रसङ्ग इत्युच्यते । तत्रापि यत्पशावाज्यभागावघातादिकमङ्गं नास्ति तादृशे ऽकृतार्थत्वात्प्रयोगवचनस्तान्याक्षिपत्येव पशुपुरोडाशे ॥१॥

( इति द्वादशाध्याये प्रथमः पादः ॥ )

विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् । अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं दधि मधु घृतमापो धानास्तत्संसृष्टं प्राजापत्यं पशुकाम इत्यत्र सप्त हवींषि । तत्र पञ्च प्राजापत्यानि । तेषु दध्यैन्द्रयोर्दर्शविकारत्वाद् वृधन्वतीमावास्यायामिति वृधन्वदपेक्षा । मधूदकयोराज्यविकारत्वमष्टमे सिद्धम् । अतो मधुघृतायाम् उपांशुयाजविकारत्वेन वार्त्रघ्नौ पौर्णमास्यामिति वार्त्रघ्नापेक्षा । इतराणि तूभयसाधारणानि । आग्नेयविकारत्वात् । तेषु भूयोनुग्रहन्यायाद्दार्शिकमेव तन्त्रम् । मुख्यं चापूर्वचोदनाल्लोकवत् । आग्नावैष्णवमेकादशकपालं निर्वपेदपराह्णे सरस्वतीप्राजस्य यजेतेति अध्वरकल्पे श्रुतम् । तत्राद्यं हविरैन्द्राग्नविकारत्वाद्दार्शिकं तन्त्रमपेक्षते द्वितीयमुपांशुयाजविकारत्वात्पौर्णमासम् । तत्र मुख्यानुरोधाद्दार्शिकमेव तन्त्रमुपजीव्यम् । आग्रयणेष्ट्यामैन्द्राग्नवैश्वदेवद्यावापृथिव्यानि हवींषि । तत्र द्यावापृथिव्यस्य वैश्वदेवकपालविकारत्वादस्ति प्रसूनबर्हिरपेक्षा । इतरेषां तु तत्रोदासीनत्वान्नास्ति प्रसूने आग्रहः । अतः कांस्यभोजिन्यायेनाग्रयणे प्रसूनमेव बर्हिः कांस्ये भोक्तव्यं गुरूच्छिष्टं च भोक्तव्यमिति शिष्यनियमादुदासीनस्यापि गुरोः कांस्यभोजनमावश्यकम् । तद्वदेतद् द्रष्टव्यम् ॥२॥

( इति द्वादशाध्याये द्वितीयः पादः ॥ )

एकार्थास्तु विकल्पेरन् यथा व्रीहियवादयः। नानध्यायोस्ति मन्त्राणां कर्मार्थत्वेन पर्वसु॥ मन्त्राणां करणत्वेन तदन्ते कर्मणः क्रिया॥३॥

(इति द्वादशाध्याये तृतीयः पादः॥)

ब्राह्मणानामार्त्विज्यमिति कल्पकारवचनात् क्षत्रियो याजको यस्य चण्डालस्य विशेषत इति रामायणे निन्दास्मरणात् चतुर्द्धाकरणमन्त्रेषु ब्राह्मणानामिदं हविरिति मन्त्रलिङ्गाच्च ब्राह्मणानामेवार्त्विज्यम्॥ ४॥

(इति चतुर्थः पादः॥)

(इति द्वादशोऽध्यायः॥)

भगवच्छिवरामतीर्थशिष्यो मुनिनारायणतीर्थनामधेयः।
व्य(अ)तनोदधिकाशि भाट्टभाषाग्रथनं भाट्टनयप्रवेशहेतोः॥
इति श्रीपरमहंसपरिव्राजकाचार्यभगवच्छिवरामतीर्थपूज्यपादशिष्यश्रीनारायणतीर्थमुनिविरचितो भाट्टभाषाप्रकाशोऽयं समाप्तिमगमत्॥

हरिः ॐ तत्सत्॥

(१) प्रकाशिकेयमिति पाठान्तरम्॥

॥ श्रीः ॥

# विज्ञप्तिः ।

—o—

अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते।

प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन,व्याकरण,धर्मशास्त्र,साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिताअन्येव शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति। भारतवर्षीयै,र्ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं

| | | | |
|---|---|---|---|
| वार्षिकमग्रिमं | मूल्यम् मुद्राः ७ | आणकाः ८ । |
| कालान्तरे प्रतिस्तबकं | ,, ,, १ | ,, ० |

प्रापणव्ययः पृथग् नास्ति।

| साम्प्रतं मुद्यमाणा ग्रन्थाः- | | मुद्रिताः स्तबकाः |
|---|---|---|
| (१) संस्काररत्नमाला। गोपीनाथभट्टकृता | (संस्कारः) | २ |
| (२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः | (व्याकरणम्) | १० |
| (३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम्। | (मीमांसा) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैत-दर्शनप्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम् श्रीनारयणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम्। (सम्पूर्णम्) | (वेदान्तः) | २ |
| (५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः | (ज्योतिषः) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय श्री गागाभट्ट विरचितः | (मीमांसा) | १ |

९ अग्रे मुद्रणीयत्वेनाभीप्सितौ ग्रन्थौः—

विधिरसायनम्। अप्पयदीक्षितकृतम् (मीमांसा)

न्यायमकरन्दः।

एतदन्यानि कानि चित्पुस्तकानि अपेक्ष्यन्ते चेदस्मत्कार्यालयपुस्तकानां मुद्रिता महती सूची आणकार्धं संप्रेष्य द्रष्टव्या।

पत्रादिप्रेषणस्थानम्

कार्याध्यक्षः-हरिदाससगुप्तः,
चौखम्बा--संस्कृतपुस्तकालयस्य
बनारस सिटी।

## The Chowkhambâ Sanskrit Series, Benares.

This Monthly Magazine consists of very rare and valuable ancient Sanskrit works on Vedic Literature, Hindu Philosophy, different sciences, general literature and Purânas &c, that have never been published before. The monthly issue of this Magazine dealing with one subject contains 100 pages of Demy octavo size, printed neatly in beautiful types on good thick paper, after being carefully corrected by the learned and experienced men, as well as by the Pandits of the Government Sanskrit College, Benares.

The works included in the Magazine hitherto issued and those in course of preparation for publication are as follows :—

| *Names of Books,* | *Fasciculus ready for Sale.* | |
|---|---|---|
| 1. Sanskâraratnamâlâ, by Gopînâtha Bhatta. | (Sanskâra) | 2. |
| 2. Śabdakaustubha, by Bhattoji Dîkshita. | (Vyâkarana) | 10. |
| 3. Śloka Vârtika of Kumârila Bhatta together with the Commentary called Nyâya-ratnâkara, by Pârthasârathi Miśra (Complete) | (Mîmânsâ) | 10. |
| 4. The Vedânta-Tatwatraya of Śri Lokacharyya along with Bhatta Bhasha Prakasha of Sri Narayana Tirtha (Complete) | (Vedanta) | 2. |
| 5. Karana-Prakash by Bramhadeva, (Complete) | (Jyotisha) | 1. |
| 6. Bhatta Chintamanih of Gaga Bhatta. | ( Mimansa ) | 1. |
| 7. Nyâya Makarand | (in preparation.) | |
| 8. Vidhirasâyana of Appaya Dîkshita. | do. | do. |

### FOR INDIA, BURMA & CEYLON.

| | | Rs. | | |
|---|---|---|---|---|
| Annual subscription | (in advance) | 7 | 8 | 0 |
| Single copy | | „ 1 | 0 | 0 |

### FOR FOREIGN COUNTRIES.

| | | £. | s. | d. |
|---|---|---|---|---|
| Annual subscription | (in advance) ... | 0 | 15 | 0 |
| Single copy | ... ... ... ... | 0 | 1 | 9 |

*Postage free.*

To be had from :—

H. D. GUPTA, *Secretary,*
*The Chowkhambâ Sanskrit Bk. Depot,*
BENARES CITY.